श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॥ॐ॥ नारायणंगुणैःसर्वैरुदी
र्णंदोषवर्जितं । ज्ञेयंगम्यंगुरूंश्चापिनत्वासूत्रार्थउच्यते ॥ द्वापरेसर्वत्रज्ञानआकुलीभूतेतन्निर्णयायब्रह्मरुद्रेंद्रा
दिभिरर्थितोभगवान्नारायणोव्यासत्वेनावततार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतांतज्ज्ञा
पनार्थंवेदमुत्सन्नंव्यंजयंश्चतुर्धाव्यभजत् चतुर्विंशतिधैकशतधासहस्रधाद्वादशधाच । तदर्थनिर्णयायब्रह्मसू
त्राणिचकार । तच्चोक्तंस्कांदे नारायणाद्विनिष्पन्नंज्ञानंकृतयुगेस्थितं । किंचित्तदन्यथाजातंत्रेतायांद्वापरे
ऽखिलं।गौतमस्यऋषेःशापाज्ज्ञानेत्वज्ञानतांगते । संकीर्णबुद्धयोदेवाब्रह्मरुद्रपुरःसराः।शरण्यंशरणंजग्मुर्ना
रायणमनामयं । तैर्विज्ञापितकार्यस्तुभगवान्पुरुषोत्तमः। अवतीर्णोमहायोगीसत्यवत्यांपराशरात् । उत्सन्ना
न्भगवान्वेदानुज्जहारहरिःस्वयं।चतुर्धाव्यभजत्तांश्चचतुर्विंशतिधापुनः । शतधाचैकधाचैवतथैवचसहस्रधा।
कृष्णोद्वादशधाचैवपुनस्तस्यार्थवित्तये। चकारब्रह्मसूत्राणियेषांसूत्रत्वमंजसा । अल्पाक्षरमसंदिग्धंसारवद्वि
श्वतोमुखं । अस्तोभमनवद्यंचसूत्रंसूत्रविदोविदुः । निर्विशेषितसूत्रत्वंब्रह्मसूत्रस्यचाप्यतः । यथाव्यासत्वमे
कस्यकृष्णस्यान्येविशेषणात्। सविशेषणसूत्राणिह्यपराणिविदोविदुः। मुख्यस्यनिर्विशेषेणशब्दोन्येषांविशेष

तः । इतिवेदविदःप्राहुःशब्दतत्त्वार्थवेदिनः । सूत्रेषुयेषुसर्वेपिनिर्णयाःसमुदीरिताः । शब्दजातस्यसर्वस्यत्प्रमाणश्चनिर्णयः। एवंविधानिसूत्राणिकृत्वाव्यासोमहायशाः।ब्रह्मरुद्रादिदेवेषुमनुष्यपितृपक्षिषु।ज्ञानंसंस्थाप्यभगवान्क्रीडतेपुरुषोत्तमइत्यादि॥॥ॐअथातोब्रह्मजिज्ञासाॐ॥ ॥अथशब्दोमंगलार्थोऽधिकारानंतर्यार्थश्च।अतःशब्दोहेत्वर्थः । उक्तंचगारुडे अथातःशब्दपूर्वाणिसूत्राणिनिखिलान्यपि।प्रारभंतेनियत्यैवतत्किमत्रनियामकं।कश्चार्थश्चतयोर्विद्वन्कथमुत्तमतातयोः।एतदाख्याहिमेब्रह्मन्यथाज्ञास्यामितत्त्वतः।एवमुक्तोनारदेनब्रह्माप्रोवाचसत्तमः।आनंतर्येधिकारस्यमंगलार्थेतथैवच।अथशब्दस्त्वतःशब्दोहेत्वर्थेसमुदीरितः। परस्यब्रह्मणोविष्णोःप्रसादादितिवाभवेत् । सहिसर्वमनोवृत्तिप्रेरकःसमुदाहृतः । सिसृक्षोःपरमाद्विष्णोःप्रथमंद्वौविनिःसृतौ । ओंकारश्चाथशब्दश्चतस्मात्प्राथमिकौक्रमात् । तद्धेतुत्वंवदंश्चापितृतीयोतउदाहृतः। अकारःसर्ववागात्मापरब्रह्माभिधायकः।तथौप्राणात्मकौप्रोक्तौव्याप्तिस्थितिविधायकौ।अतश्चपूर्वमुच्चार्याःसर्वएतेसतांमताः।अथातःशब्दयोरेवंवीर्यमाज्ञायतत्त्वतः।सूत्रेषुतुमहाप्राज्ञास्तावेवादौप्रयुंजतइति। अधिकारश्चोक्तोभागवततंत्रे मंदमध्योत्तमत्वेनत्रिविधाह्यधिकारिणः । तत्रमंदामनुष्येषुयउत्तमगणामताः । मध्यमाऋषिगं

धर्वादेवास्तत्रोत्तमामताः।इतिजातिकृतोभेदस्तथान्योगुणपूर्वकः।भक्तिमान्परमेविष्णौयस्त्वध्ययनवान्नरः।
अधमःशमादिसंयुक्तोमध्यमःसमुदाहृतः।आब्रह्मस्तंबपर्यंतमसारंचाप्यनित्यकं। विज्ञायजातवैराग्योविष्णु
पादैकसंश्रयः।सउत्तमोधिकारीस्यात्संन्यस्ताखिलकर्मवानिति। अध्ययनमात्रवतः।नाविशेषादितिचोपरि।
शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वाआत्मन्येवात्मानंपश्येत्। परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वे
दमायान्नास्त्यकृतःकृतेन। तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत् समित्पाणिःश्रोत्रियंब्रह्मनिष्ठं। यमेवैषवृणुतेतेन
लभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वां।यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ।तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहा
त्मनइत्यादिश्रुतिभ्यश्च। व्योमसंहितायांच अंत्यजाअपियेभक्तानामज्ञानाधिकारिणः। स्त्रीशूद्रब्रह्मबंधूनांतं
त्रज्ञानेऽधिकारिता। एकदेशेपरोक्तेतुनतुग्रंथपुरःसरे।त्रैवर्णिकानांवेदोक्तेसम्यग्भक्तिमतांहरौ। आहुरप्युत्त
मस्त्रीणामधिकारंतुवैदिके । यथोर्वशीयमीचैवशच्याद्याश्चतथापराइति। यतोनारायणप्रसादमृतेनमोक्षः
नचज्ञानंविनात्यर्थप्रसादः अतोब्रह्मजिज्ञासाकर्तव्या। यत्रानवसरोन्यत्रपदंतत्रप्रतिष्ठितं। वाक्यंवेतिसतां
नीतिःसावकाशेनतद्भवेदितिबृहत्संहितायां।तमेवंविद्वानमृतइहभवति नान्यःपंथाअयनायविद्यते। प्रियो

हिज्ञानिनोत्यर्थमहंसचममप्रियः । यमेवैषवृणुतेतेनलभ्यः । आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्या
सितव्यइत्यादिश्रुतिस्मृतिभ्यः । कर्मणात्वधमःप्रोक्तःप्रसादःश्रवणादिभिः । मध्यमोज्ञानसंपत्त्याप्रसादस्तू
त्तमोमतः । प्रसादात्त्वधमाद्विष्णोःस्वर्गलोकःप्रकीर्तितः । मध्यमाज्जनलोकादिरुत्तमस्त्वेवमुक्तिदः । श्रवणं
मननंचैवध्यानंभक्तिस्तथैवच । साधनंज्ञानसंपत्तौप्रधानंनान्यदिष्यते । नचैतानिविनाकश्चिज्ज्ञानमापकुत
श्चनेतिनारदीये । ब्रह्मशब्दश्चविष्णावेव । यमंतःसमुद्रेकवयोवयंतियदक्षरेपरमेप्रजाः । यतःप्रसूताजगतःप्र
सूतीतोयेनजीवान्व्यससर्जभूम्यामित्युक्ता । तदेवर्तंतदुसत्यमाहुस्तदेवब्रह्मपरमंकवीनामितिहिश्रुतिः । त
न्नोविष्णुरितिवचनाद्विष्णुरेवहितत्रोच्यते । नचेतरशब्दात्तत्प्राप्तिः । नामानिविश्वाभिनसंतिलोकेयदाविरा
सीदनृतस्यसर्वं । नामानिसर्वाणियमाविशंतितंवैविष्णुंपरममुदाहरंतीतिभाल्लवेयश्रुतिः । योदेवानांनामधा
एकएवतंसंप्रश्नंभुवनायंत्यन्येत्येवशब्दान्नान्येषांसर्वनामता । अजस्यनाभावध्येकमर्पितंयस्मिन्विश्वानिभुव
नानितस्थुरितिहिविष्णोर्लिंगं । नचप्रसिद्धार्थंविनान्योर्थोयुज्यते । अजस्यनाभावितियस्यनाभेरभूच्छुतः
पुष्करंलोकसारं । तस्मैनमोव्यस्तसमस्तविश्वविभूतयेविष्णवेलोककर्त्रेइतिस्कांदे । परोदिवापरएनापृथिव्ये

तिसमाख्याश्रुतौ। यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधामित्युक्त्वाममयोनिरप्स्वं१तःसमुद्रइत्याह । उग्रोरुद्रः । समुद्रेंतर्नारायणः । प्रसिद्धत्वात्सूचितत्वाच्चास्यार्थस्य । नचाविरोधेप्रसिद्धःपरित्यज्यते । उक्तन्यायेनचश्रुतयएतमेववदंति। वेदेरामायणेचैवपुराणेभारतेतथा।आदावंतेचमध्येचविष्णुःसर्वत्रगीयतइतिहरिवंशेषु। नचेतरग्रंथविरोधः। एषमोहंसृजाम्याशुयोजनान्मोहयिष्यति। त्वंचरुद्रमहाबाहोमोहशास्त्राणिकारय । अतथ्यानिवितथ्यानिदर्शयस्वमहाभुज। प्रकाशंकुरुचात्मानमप्रकाशंचमांकुर्वितिवाराहवचनात्। शैवेचस्कांदे श्वपचादपिकष्टत्वंब्रह्मेशानादयःसुराः। तदैवाच्युतयांत्येवयदैवत्वंपराङ्मुखइति। ब्राह्मेचब्रह्मवैवर्ते नाहंनचशिवोन्येचतच्छक्त्येकांशभागिनः।बालःक्रीडनकैर्यद्वत्क्रीडतेस्माभिरच्युतइति। नचवैष्णवेषुतथा। तच्चैषमोहमित्युक्तं ॥ १ ॥ ब्रह्मणोलक्षणमाह ॥ ॥ॐजन्माद्यस्ययतः२ॐ॥ ॥ सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबंधमोक्षायतः। उत्पत्तिस्थितिसंहारानियतिर्ज्ञानमावृतिः। बंधमोक्षौचपुरुषाद्यस्मात्सहरिरेकराडितिस्कांदे। यतोवाइमानिभूतानिजायंतेयेनजातानिजीवंतियत्प्रयंत्यभिसंविशंतितद्विजिज्ञासस्वतद्ब्रह्मेति। यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा। चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्य

तीँरवीविपत।परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति।नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंत
माप। योनःपिताजनितायोविधाताधामानिवेदभुवनानिविश्वेत्यादिच ॥२॥ अनुमानतोन्येनकल्पनीयाः ॥
ॐ३शास्त्रयोनित्वात् ॐ ॥ ॥ नावेदविन्मनुतेदंबृहंतंसर्वानुभुमात्मानꣳसांपराये। औपनिषदःपुरुषइत्यादिश्रु
तिभ्यश्च।नचानुमानस्यनियतप्रामाण्यं।श्रुतिसाहाय्यरहितमनुमानंनकुत्रचित्। निश्चयात्साधयेदर्थंप्रमाणां
तरमेवच। श्रुतिस्मृतिसहायंयत्प्रमाणांतरमुत्तमं। प्रमाणपदवींगच्छेन्नात्रकार्याविचारणा। पूर्वोत्तराविरोधे
नकोत्रार्थोभिमतोभवेत्। इत्याद्यमूहनंतर्कःशुष्कतर्कंतुवर्जयेदित्यादिमहाकौर्मे। शक्यत्वाच्चानुमानांसर्व
त्र। सर्वत्रशक्यतेकर्तुमागमंहिविनानुमा। तस्मान्नसाशक्तिमतीविनागममुदीक्षितुमितिवाराहे। रेतो
धातुर्वटकणिकाघृतधूमाधिवासनं। जातिस्मृतिरयस्कांतःसूर्यकांतोंबुभक्षणं। प्रेत्यभूताप्ययश्चैवदेवताभ्युप
याचनं। मृतेकर्मनिवृत्तिश्चप्रमाणमितिनिश्चयइतिमोक्षधर्मवचनान्ननास्तिक्यवादोयुज्यते। दर्शनाच्चतप
आदिफलस्य। ऋग्यजुःसामाथर्वाश्चभारतंपंचरात्रकं। मूलरामायणंचैवशास्त्रमित्यभिधीयते। यच्चानुकूल
मेतस्यतच्चशास्त्रंप्रकीर्तितं। अतोन्योग्रंथविस्तारोनैवशास्त्रंकुवर्त्मतदितिस्कांदे। सांख्यंयोगःपाशुपतंवेदा

रण्यकमेवचेत्यारभ्यवेदपंचरात्रयोरैक्याभिप्रायेणपंचरात्रस्यैवप्रामाण्यमुक्तमितरेषांभिन्नमतत्वंप्रदर्श्यमोक्ष
धर्मेष्वपि । शास्त्रंयोनिःप्रमाणमस्येतिशास्त्रयोनि ॥ ३ ॥ अज्ञानांप्रतीयमानमपिनेतरेषांशास्त्रयोनित्वं । कु
तः ॥ ॥ ॐतत्तुसमन्वयात्ॐ ॥ ॥ अन्वयउपपत्त्यादिलिंगं । उक्तंचबृहत्संहितायां उपक्रमोपसंहारावभ्यासो
पूर्वताफलं।अर्थवादोपपत्तीचलिंगंतात्पर्यनिर्णयइति। उपक्रमादितात्पर्यलिंगैःसम्यङ्निरूप्यमाणेतदेवशास्त्र
गम्यं । मांविधत्तेभिधत्तेमांविकल्प्योपोह्यइत्यहं । इत्यस्याहृदयंसाक्षान्नान्योमद्वेदकश्चनेतिभागवते ॥ ४ ॥
ननुयतोवाचोनिवर्तंतेअप्राप्यमनसासह। अशब्दमस्पर्शमरूपमव्ययंतथाऽरसंनित्यमगंधवच्चयत्। अवचनेनै
वप्रोवाच ।यद्वाचानभ्युदितंयेनवागभ्युद्यते यच्छ्रोत्रेणनशृणोतियेनश्रोत्रमिदंश्रुतमित्यादेर्नतच्छब्दगोचरं।
नेत्याह ॥ ॥ ॐईक्षतेर्नाशब्दंॐ ॥ ॥ सएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुषमीक्षते । आत्मन्येवात्मानं
पश्येत् । विज्ञायप्रज्ञांकुर्वीतेत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव । औपनिषदत्वान्नावचनेनेक्षणं । सर्वेवेदा
यत्पदमामनंतितपांसिसर्वाणिचयद्वदंति । वेदैश्चसर्वैरहमेववेद्योवेदांतकृद्वेदविदेवचाहमित्यादिश्रुतिस्मृति
भ्यश्च । अवाच्यत्वादिकंत्वप्रसिद्धत्वात् । नतदीदृगितिज्ञेयंनवाच्यंनचतर्क्यते । पश्यंतोपिनपश्यंतिमे

रोरूपंविपश्चितइतिवत् । अप्रसिद्धेरवाच्यंतद्वाच्यंसर्वागमोक्तितः । अतर्क्यंतर्क्यमज्ञेयंज्ञेयमेवंपरंस्मृतमिति
गारुडे । नचाशब्दत्वमितरसिद्धं ॥ ५ ॥ ॐगौणश्चेन्नात्मशब्दात् ॐ॥ ॥ नचगौणआत्मादृश्योवाच्यश्चननिर्गु
णइतियुक्तं । आत्मशब्दात् । योगुणैःसर्वतोहीनोयश्चदोषविवर्जितः।हेयोपादेयरहितःसआत्मेत्यभिधीयते ।
एतदन्यस्वभावोयःसोनात्मेतिसतांमतं । अनात्मन्यात्मशब्दस्तुसोपचारःप्रयुज्यतइतिवामने । द्वेवावब्रह्मणो
रूपेआत्माचैवानात्माच । तत्रयःसआत्मासनित्यःशुद्धःकेवलोनिर्गुणश्च । अथहयोऽनीदृशःसोऽनात्मेतित
लवकारब्राह्मणं । नचमुख्येसत्यमुख्यंयुज्यते ॥ ६ ॥ ॐतन्निष्ठस्यमोक्षोपदेशात् ॐ॥ ॥ नहिगौणात्मनिष्ठस्य
मोक्षः। यस्यानुवित्तःप्रतिबुद्धआत्माअस्मिन्संदोघेगहनेप्रविष्टः।सविश्वकृत्सहिसर्वस्यकर्तातस्यलोकःसउलो
कएवेत्यात्मनिष्ठस्यमोक्षउपदिश्यते । अयमात्माब्रह्म । ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते । दत्तंदुर्वाससं
सोममात्मेशब्रह्मसंभवान् । चेतनस्तुद्विधाप्रोक्तोजीवआत्मेतिचप्रभो। जीवाब्रह्मादयःप्रोक्ताआत्मैकस्तुजना
र्दनः।इतरेष्वात्मशब्दस्तुसोपचारःप्रयुज्यते।तस्यात्मनोनिर्गुणस्यज्ञानान्मोक्षउदाहृतः।सगुणास्त्वपरेप्रोक्तास्त
ज्ज्ञानान्नैवमुच्यते।परोहिपुरुषोविष्णुस्तस्मान्मोक्षस्ततःस्मृतइतिपाद्मे ॥ ७ ॥ ॐहेयत्वावचनाच्च ॐ॥ ॥तमेवै

कंजानथआत्मानमन्यावाचोविमुञ्चथ । अमृतस्यैषसेतुरित्यन्येषांहेयत्ववचनादस्याहेयत्ववचनान्नगौणआ
त्मा ॥ ८ ॥ ॐस्वाप्ययात्ॐ ॥ ॥ पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते। पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते।
सआत्मनआत्मानमुद्धृत्यात्मन्येवविलापयत्यथात्मैवभवति। सदेवोबहुधाभूत्वानिर्गुणःपुरुषोत्तमः । एकीभू
यपुनःशेतेनिर्दोषोहरिरादिकृदितिस्वस्यैवस्वस्मिन्नप्ययवचनात्।नहिगौणात्मनिनिर्दोषस्यलयः॥ ९ ॥ नच
कासुचिच्छाखास्वन्यथोच्यते ॥ ॥ ॐगतिसामान्यात्ॐ॥ ॥ सर्ववेदायुक्तयःसुप्रमाणाब्राह्मंज्ञानंपरमंत्वेकमे
व। प्रकाशयंतेनविरोधःकुतश्चिद्वेदेषुसर्वेषुतथेतिहासइतिपैंगिश्रुतेर्गतेर्ज्ञानस्यसाम्यमेव ॥ १० ॥ ॐश्रुतत्वा
च्चॐ ॥ ॥ एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा। कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलो
निर्गुणश्चेति। नह्यशब्दःश्रूयते। नचाप्रसिद्धंकल्प्यं।सर्वशब्दावाच्यस्यलक्षणायुक्तेः ॥ ११ ॥ ५ ॥ तमेवसमन्वयंप्र
कटयत्यानंदमयोभ्यासादित्यादिनासमस्तेनाध्यायेनप्रायेण। प्रायेणान्यत्रप्रसिद्धानांशब्दानांपरमात्मनिस
मन्वयःप्रदर्श्यतेऽस्मिन्पादे। नान्यथातदद्दृष्टेः। ब्रह्मजिज्ञासाकर्तव्येत्युक्तं । तच्चब्रह्म ब्रह्मपुच्छंप्रतिष्ठेत्यानंदम
यावयवरूपंप्रतीयते। नह्यवयविनंविनाअवयवमात्रस्यज्ञेयतेत्यतआह ॥ ॥ ॐआनंदमयोभ्यासात्ॐ ॥ ॥ १२

आनंदमयोब्रह्मादिःप्रकृतिर्विष्णुर्वा। ब्रह्मशब्दाद्धिरण्यगर्भस्यप्राप्तिः शतानंदनाम्नाच। अष्टमूर्तित्वात्सूर्येप्रो
क्तत्वाच्चरुद्रस्य। एवमन्येषामपि। ममयोनिर्महद्ब्रह्मेतिब्रह्मशब्दाद्बहुभावाच्चप्रकृतेः। बृहजातिजीवकमलासन
शब्दराशिष्वितिब्रह्मशब्दादेवसर्वजीवानां अन्नमयत्वादेश्च। तथापिनतआनंदमयशब्देनोच्यंते। किंतुवि
ष्णुरेव। तदेवब्रह्मपरमंकवीनां एतमेवब्रह्मेत्याचक्षते ब्रह्मशब्दःपरेविष्णौनान्यत्रकचिदिष्यते। असंपूर्णाः
परेयस्मादुपचारेणवाभवेत्। ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते। वासुदेवात्मकंब्रह्ममूलमंत्रेणवायतिरि
त्यादिषुतस्मिन्नेवप्रसिद्धब्रह्मशब्दाभ्यासात्।।[१२]।।ॐ[१३]विकारशब्दान्नेतिचेन्नप्राचुर्यात्ॐ।। ।।विकारात्मकत्वा
त्तदभिमानित्वाच्चयुज्यतेप्रकृत्यादीनांमयट्शब्दः नतुपरमात्मनइतिमाभूत्। प्रचुरानंदत्वाद्ध्यानंदमयः।
नतुतद्विकारत्वात्। अन्नादीनांचप्राचुर्यमेव। अद्यतेऽत्तिचेतिव्याख्यानात्तत्प्राचुर्यंचयुज्यते। उपजीव्यत्वमे
वाद्यत्वं। सवाएषइत्यन्यप्रारंभात्। येऽन्नंब्रह्मोपासतइत्यादिब्रह्मशब्दाद्बहुरूपत्वाच्चनविकारित्वमविरोधश्च।
नचपृथक्कल्पनायुक्ता। स्वरूपेचयुज्यते प्रचुरप्रकाशोरविरितिवत्।। [१३] ।। ॐ[१४]तद्धेतुव्यपदेशाच्चॐ।। ।।कोह्ये
वान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यादिति।। [१४] ।। ॐ[१५]मांत्रवर्णिकमेवचगीयतेॐ।। ।। ब्रह्मविदाप्नोति

परमितिसूचयित्वा सत्यंज्ञानमनंतंब्रह्मेतिमंत्रवर्णोपलक्षितंपरमेवब्रह्मशब्दानुसंधानाद्गीयते । नचावयवत्ववि
रोधः । सशिरःसदक्षिणःपक्षःसउत्तरःपक्षःसआत्मासपुच्छमितितस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायां । शिरो
नारायणःपक्षोदक्षिणःसव्यएवच । प्रद्युम्नश्चानिरुद्धश्चसंदोहोवासुदेवकः । नारायणोथसंदोहोवासुदेवःशिरो
पिवा । पुच्छंसंकर्षणःप्रोक्तएकएवतुपंचधा । अंगांगित्वेनभगवान्क्रीडतेपुरुषोत्तमः । ऐश्वर्यान्नविरोधश्चचिं
त्यस्तस्मिन्जनार्दने । अतर्क्येहिकुतस्तर्कस्त्वप्रमेयेकुतःप्रमेतिबृहत्संहितायां । रसशब्देनविशेषणात्तत्तत्सार
भूतंचिन्मात्रमेवोच्यते । इदमितिंचदृश्यमानसन्निहितत्वात् । अनन्योप्यन्यशब्देनतथैकोबहुरूपवान् ।
प्रोच्यतेभगवान्विष्णुरैश्वर्यात्पुरुषोत्तमइतिब्रह्मांडे ॥ [१५] ॥ नचोक्तप्राप्त्याविरिंचादिरुच्यते ॥ ॥ ॐनेतरोनु [१६]
पपत्तेः ॐ ॥ ॥ नह्यन्यज्ञानान्मोक्षउपपद्यते । तमेवंविद्वानमृतइहभवति नान्यःपंथाअयनायविद्यतइति
ह्युक्तं ॥ [१६] ॥ ॐभेदव्यपदेशाच्चॐ ॥ [१७] ॥ तेयेशतंप्रजापतेरानंदाः । अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभ
यंप्रतिष्ठांविंदते । अथसोभयंगतोभवति । सयश्चायंपुरुषइत्यादिभेदव्यपदेशात् । नच तत्त्वमस्यहंब्रह्मास्मी
त्यादिश्रुतिविरोधः । नामानिसर्वाणियमाविशंतीतितत्तच्छब्दवाच्यत्वोक्तेः । इदंहिविश्वंभगवानिवेतरो

यतोजगत्स्थाननिरोधसंभवः। असर्वःसर्वइत्यपि। विद्यात्मनिभिदाबोधः। भेददृष्ट्याभिमानेननिःसंगेनापि कर्मणा। जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमितिवीतशोकः। असर्वःसर्वइवात्मैवसन्ननात्मेवप्रत्यङ्पराङि वैकईयतेबहुधेयतेसपुरुषःसईश्वरःसब्रह्म। सर्वांतर्यामिकोविष्णुःसर्वनाम्नाऽभिधीयते। एषोहंत्वमसौचेतिन तुसर्वस्वरूपतः। नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वहेत्यादेश्च। उक्ताचप्राप्तिः। ब्रह्मैवसन्नित्यपिजीवएवब्रह्मश ब्दः।उपपद्यतेचविरोधे। प्रमादात्मकत्वाद्बंधस्यविमुक्तत्वंचयुज्यते। मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थिति रितिहिभागवते॥ १७ ॥नचतत्तदनुमानविरोधः॥ ॥ॐ १८ कामाच्चनानुमानापेक्षा ॐ॥ ॥यथाकामंह्यनुमातुंशक्य ते। अतोनतत्त्वेपृथगनुमानमपेक्ष्यते। उक्तंचस्कांदे यथाकामानुमायस्मात्तस्मात्साऽनपगाश्रुतेः। पूर्वापरावि रोधायचेष्यतेनान्यथाक्वचिदिति। नैषातर्केणमतिराऽपनेयेतिच॥ १८ ॥ॐ १९ अस्मिन्नस्यचतद्योगंशास्ति॥ॐ॥ अस्यजीवस्य। युक्तिसमुच्चयेचशब्दः। सोऽश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता। अनिलयनेअभयंप्रतिष्ठां विंदते। एतमानंदमयमात्मानमुपसंक्रामतीत्यादि॥ १९ ॥अदृश्येनात्म्यइत्युक्तं। तच्चादृश्यत्वंअंतःप्रविष्टंकर्ता रमेतमंतश्चंद्रमसिमनसाचरंतं। सहैवसंतंनविजानंतिदेवाइत्यंतस्थस्यकस्यचिदुच्यते। सचेंद्रोराजा सम्यं

जंतीत्यादिभिरन्यःप्रतीयते। तस्मात्सएवानंदमयइतिनमंतव्यं॥ ॥ॐ[20]अंतंस्तद्धर्मोपदेशात्ॐ ॥ ॥ अंतः
श्रूयमाणोविष्णुरेव। अंतःसमुद्रेमनसाचरंतंब्रह्मान्वविंददृशहोतारमर्णे। समुद्रेंतःकवयोविचक्षते । मरीची
नांपदमिच्छंतिवेधसः। यस्यांडकोशंशुष्ममाहुरित्यादितद्धर्मोपदेशात्। सहिक्षीरसमुद्रशायी । तस्यचवी
र्यमंडकोशः । सोभिध्यायशरीरात्स्वात्सिसृक्षुर्विविधाःप्रजाः। अपएवससर्जादौतासुवीर्यमवासृजत्। तदं
डमभवद्धैमंसहस्रांशुसमप्रभं। यस्मिन्जज्ञेस्वयंब्रह्मासर्वलोकपितामहः। आपोनाराइतिप्रोक्ताआपोवैनरसू
नवः। अयनंतस्यताःपूर्वंतेननारायणःस्मृतइतिव्यासस्मृतौ ।अहंतत्तेजोरश्मीन्नारायणंपुरुषंजातमग्रतः ।
पुरुषात्प्रकृतिर्जगदंडमितिचतुर्वेदशिखायां॥ [20]॥ ॐ[21]भेदंव्यपदेशाच्चान्यः ॐ ॥ ॥ इंद्रस्यात्मानिहितःपंचहो
ता वायोरात्मानंकवयोनिचिक्युः अंतरादित्येमनसाचरंतंदेवानांहृदयंब्रह्मान्वविंददित्यादिभेदव्यपदे
शात्॥ [21]॥ कोह्येवान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यादित्याकाशस्यानंदमयत्वेहेतुरुक्तः । नतुवि
ष्णोरितिनमंतव्यं। यतः॥ ॥ ॐ[22]आकाशस्तल्लिंगात्ॐ ॥ ॥ अस्यलोकस्यकागतिरित्याकाशइतिहोवाचेत्य
त्रभूताकाशस्यप्राप्तिः।नचासौयुज्यते। किंतुविष्णुरेव। सएषपरोवरीयानुद्गीथःसएषोनंतइत्यादितल्लिंगात्।

विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि । परोमात्रयातन्वावृधानेत्यादिनातस्यैवहितालिंगं ।
अनंतोभगवान्ब्रह्मआनंदेत्यादिभिःपदैः । प्रोच्यतेविष्णुरेवैकःपरेषामुपचारतइतिब्राह्मे । नामानिसर्वाणिय
माविशंतीतिचोक्तं ॥[२२] ८॥ ॐ[२३]अतएवप्राणः ॐ ॥ ॥ तद्वैत्वंप्राणोअभवःमहान्भोगःप्रजापतेःभुजःकरिष्यमा
णःयद्देवान्प्राणयोनवेतिमहाभोगशब्देनपरमानंदत्वंप्राणस्योक्तं । सचप्राणःप्रसिद्धेर्वायुरित्यापतति । न
चैवं । यतोविष्णुरेवप्राणः । अतएव श्रीश्चतेलक्ष्मीश्चपत्न्यौअहोरात्रेपार्श्वे इत्यादितलिंगादेव ॥ [२३] ९ ॥
योवेदनिहितंगुहायामित्युक्तं । तच्चगुहानिहितं । विमेकर्णापतयतोविचक्षुर्वी३दंज्योतिर्हृदयआहितंयत् । प्लु तु.
विमेमनश्चरतिदूरआधीःकिंस्विद्वक्ष्यामिकिमुनूमनिष्यइतिज्योतिरुक्तं । तच्चज्योतिरभिसूक्तत्वात्प्रसिद्धेश्चा
ग्निरेवेतिप्राप्तं । अतआह ॥ ॥ ॐज्योतिश्चरणाभिधानात्ॐ ॥ ॥ विष्णुरेवज्योतिः । कर्णादीनांविच
रणाभिधानात् । सहिपरोमात्रयातन्वावृधानेत्यादिनाकर्णादिविदूरः ॥[२४] १०॥ ॥ ॐ[२५]छंदोभिधानान्नेतिचे
न्नतथाचेतोर्पणनिगदात्तथाहिदर्शनंॐ ॥ ॥ अथयदतःपरोदिवोज्योतिर्दीप्यतइत्युक्तस्यज्योतिषोगाय
त्रीवाइदंसर्वमितिगायत्र्यासमारंभःकृतः । तस्मान्नविष्णुरितिचेन्न । तथाचेतोर्पणार्थंहिनिगद्यते । अ

स्निगायत्र्यादिशब्दार्थरूपोसाविति चेतोर्पणार्थंहिनिगद्यते । तथाहिदर्शनं । गायतित्रायतिचेत्यादि । सर्वच्छंदोभिधोह्येषसर्वदेवाभिधोह्यसौ । सर्वलोकाभिधोह्येषतेषांतदुपचारतइतिवामने ॥ [२५] ॥ ॐ[२६] भूतादिपादव्यपदेशोपपत्तेश्चैवं ॐ ॥ ॥ तावानस्यमहिमाततोज्यायांश्चपुरुषः। पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवीति । सुवर्णकोशंरजसापरीवृतंदेवानांवसुधानींविराजं । अमृतस्यपूर्णांतामुकलांविचक्षते पादंषड्ढोतुर्नकिलाविवित्सइतिश्रुतेः । पादइत्येकदेशपरिमितं । चतुर्भागबलइतिवद्भिन्नंच । सहिपुरुषसूक्ताभिधेयः । यज्ञेन यज्ञमयजंतेतियज्ञशब्दात् । यज्ञोविष्णुर्देवतेतिहिश्रुतिः। तस्मिन्कालेमहाराजरामएवाभिधीयते । यथाहि पौरुषेसूक्तेविष्णुरेवाभिधीयतइतिस्कांदे॥ [२६] ॥ ॐ[२७] उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात्ॐ ॥ ॥ त्रिपादस्यामृतंदिवीतिपूर्वोपदेशः। परोदिवइतिपंचम्यंतःपश्चिमः । तस्मान्नैकंवस्त्वत्रोच्यतइतिचेन्न । त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥ [२७] ११ ॥ प्राणोविष्णुरित्युक्तं । तत्र तावाएताःशीर्षञ्छ्रियःश्रिताश्चक्षुश्श्रोत्रं मनोवाक्प्राणइत्यत्रप्राणस्यविष्णुत्वंनयुज्यते । इंद्रियैःसहाभिधानादिति । अतआह ॥ ॥ ॐ[२८] प्राणस्तथानुगमात् ॐ ॥ ॥ तंदेवाःप्राणयंत सएषोसुःसएषप्राणः प्राणऋचइत्येवविद्यात्।तदयंप्राणोधितिष्ठतीत्याद्यनुग

मादत्रापिप्राणोविष्णुरेव। विष्णुमेवानयन्देवाविष्णुंभूतिमुपासते । सएवसर्ववेदोक्तस्तद्रथोदेहउच्यतइति
स्कांदेब्रह्मशब्दानुगमाच्च॥ [२८] ॥ॐ[२९]नवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमाह्यस्मिन् ॐ॥ ॥ प्राणोवाअ
हमस्म्यृषइतिवक्तुरात्मोपदेशादिंद्रएवेतिचेन्न । प्राणस्त्वंप्राणःसर्वाणिभूतानीतिबह्वध्यात्मसंबंधोह्यत्रविद्यते
॥ [२९] ॥ ॐ[३०]शास्त्रदृष्ट्यातूपदेशोवामदेववत् ॐ॥ ॥शास्त्रमंतर्यामि। संविच्छास्त्रंपरंपदमितिहिभागवते। तत्त
न्नाम्नोच्यतेविष्णुःसर्वशास्तृत्वहेतुतः। नक्वापिकिंचिन्नामास्तितम्हृतेपुरुषोत्तममितिपाद्मे । अहंमनुरभवंसूर्य
श्चेत्यादिवत्॥ [३०] ॥ॐ[३१]जीवमुख्यप्राणलिंगान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्ॐ॥ ॥ तावं
तिशतसंवत्सरस्याह्नांसहस्राणिभवंतीतिजीवलिंगं। प्राणसंवादादिमुख्यप्राणलिंगं। तस्मान्नेतिचेन्न। अंतर्ब
हिःसर्वगतत्वेनेत्युपासात्रैविध्यादिहाश्रितत्वाच्च। सएतमेवसीमानंविदार्यैतयाद्वाराप्रापद्यत। सएतमेवपुरु
षंब्रह्मततममपश्यत् एतद्धस्मवैतद्विद्वानाहमहिदासऐतरयइत्यादिना। महिदासाभिधोजज्ञइतरायास्तपो
बलात्। साक्षात्सभगवान्विष्णुर्यस्तंत्रंवैष्णवंव्यधादितिब्रह्मांडे। तत्तदुपासनायोग्यतयाचपुरुषाणां।केषांचि
त्सर्वगत्वेनकेषांचिद्धृदयेहरिः। केषांचिद्बहिरेवासावुपास्यःपुरुषोत्तमइतिब्राह्मे । अन्नौक्रियावतांविष्णुर्यो

गिनांहृदयेहरिः। प्रतिमास्वप्रबुद्धानांसर्वत्रविदितात्मनामितिच ॥ [३१] १२ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसू
त्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाध्यायस्यप्रथमःपादः ॥ १ ॥ १ ॥ ॥ ॥
॥ ॐ ॥ लिंगात्मकानांशब्दानांविष्णौप्रवृत्तिंदर्शयत्यस्मिन्पादेप्राधान्येन। ब्रह्मततममितिसर्वगतत्वमुक्तंवि
ष्णोः। तच्चतस्यैतस्यासावादित्योरसइत्यादिनाऽऽदित्यस्यप्रतीयतइत्यतोब्रवीत् ॥ ॥ ॐसर्वत्रप्रसिद्धोपदे
शात्ॐ ॥ ॥ सयश्चायमशरीरःप्रज्ञात्मेत्यादिनासर्वत्रोच्यमानोनारायणएव। तदेवब्रह्मपरमंकवीनां। पर
मंयोमहद्ब्रह्म। वासुदेवात्परःकोनुब्रह्मशब्दोदितोभवेत्। सहिसर्वगुणैःपूर्णस्तदन्येतूपचारतइतितस्मिन्नेवप्र
सिद्धब्रह्मशब्दोपदेशात् ॥ [१] ॥ ॐ[२]विवक्षितगुणोपपत्तेश्चॐ ॥ ॥ सयोतोश्रुतइत्यादि। सहि नतेविष्णोजा
यमानइत्यादिनाऽश्रुतत्वादिगुणः। ससवितासवायुःसइंद्रःसोश्रुतःसोदृष्टोयोहरिर्यःपरमोयोविष्णुर्योनंतइ
त्यादिचतुर्वेदशिखायां ॥ [२] ॥ नचादित्यशब्दाच्चक्षुर्मयत्वादेश्चजीवइतिवाच्यं ॥ ॥ ॐ[३]अनुपपत्तेस्तुनशारीरः
ॐ ॥ ॥ एकस्यसर्वशरीरस्थत्वानुपपत्तेरेव ॥ [३] ॥ ॐकर्मकर्तृव्यपदेशाच्चॐ ॥ ॥ आत्मानंपरस्मैशंस
तीत्यादि ॥ [४] ॥ ॐशब्दविशेषात्ॐ ॥ ॥ एतमेवब्रह्मेत्याचक्षतइति। नहिजीवमेवब्रह्मेत्याचक्षते। एषउ

एवब्रह्मैषउएवात्मैषउएवसवितैषउएवइंद्रएषउएवहरिर्हरतिपरःपरानंदइतिचैंद्रद्युम्नशाखायां ॥ ५ ॥ ॐस्मृतेश्च ॐ ॥ ॥ अहमात्मागुडाकेशसर्वभूताशयस्थितः । गामाविश्यचभूतानिधारयाम्यहमोजसेत्यादि । नचाप्रामाणिकंकल्प्यं ॥ ६ ॥ ॐअर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्ननिचाय्यत्वादेवंव्योमवच्चॐ ॥ ॥ सर्वेषुभूतेष्वित्यल्पौकस्त्वाच्चक्षुमयत्वादिनाजीवव्यपदेशाच्चनेतिचन्न । अर्भकौकस्त्वेनचक्षुर्मयत्वादिरूपेणचतस्यैवविष्णोर्निचाय्यत्वात् । सर्वगतत्वेप्यल्पौकस्त्वंचयुज्यतेव्योमवत् । सर्वेंद्रियमयोविष्णुःसर्वप्राणिषुचस्थितः । सर्वनामाभिधेयश्चसर्ववेदोदितश्चसइतिस्कांदे ॥ ७ ॥ ॐसंभोगप्राप्तिरितिचेन्नवैशेष्यात्ॐ ॥ ॥ जीवपरयोरेकशरीरस्थत्वेसमानभोगप्राप्तिरितिचेन्न । सामर्थ्यवैशेष्यात् । उक्तंचगारुडे सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः । स्वातंत्र्यपारतंत्र्याभ्यांसंभोगोनेशजीवयोरिति ॥ ८ ॥ जन्माद्यस्ययतइत्युक्तं । तत्रात्तृत्वंसयद्यदेवासृजततत्तदत्तुमध्रियत सर्ववाअत्तीतितददितेरदितित्वमित्यदितेःप्रतीयते । सयद्यदेवासृजतेतिपुल्लिंगंचकूटस्थोक्षरउच्यतइत्यादिवत् । अत्रोच्यते ॥ ॥ ॐअत्ताचराचरग्रहणात्ॐ ॥ ॥ नहिचराचरस्यसर्वस्यात्तृत्वमदितेः । स्रष्टापातातथैवात्तानिखिलस्यैकएवतु । वासुदेवःपरःपुंसामितरेऽल्पस्यवान

वेतिस्कांदे । एकःपुरस्ताद्यइदंबभूवयतोबभूवभुवनस्यगोपाः । यमप्येतिभुवनंसांपरायेसनोहरिर्घृतमिहा
युषेत्तुदेवइतिश्रुतिः ॥ [९] ॥ ओं[१०]प्रकरणाच्चओं ॥ ॥ अप्संवत्सरसृष्ट्यादिनातत्प्रकरणाच्च । नेहासीत्किंच
नाप्यादौमृत्युरासीद्धरिस्तदा । सोत्मनोमनसास्राक्षीदपएवजनार्दनः । शयानस्तासुभगवान्निर्ममेंडंमहत्त
रं । तत्रसंवत्सरंनामब्रह्माणमसृजत्प्रभुः । तमत्तुंव्याददादास्यंतदासौविरुरावह । अथतंकृपयाविष्णुःसृष्टिक
र्मण्ययोजयत् । सोसृजद्भुवनंविश्वमद्यार्थंहरयेविभुरितिब्रह्मवैवर्ते ॥ [१०] ॥ सर्वात्तैकःपरउक्तः । ऋतंपिबंतौसु
कृतस्यलोकेगुहांप्रविष्टौपरमेपरार्द्धे । छायातपौब्रह्मविदोवदंतिपंचाग्नयोयेचत्रिनाचिकेताइतिपिबंतौप्रतीये
ते । तौकाविति । उच्यते ॥ ॥ ओं[११]गुहांप्रविष्टावात्मानौहितद्दर्शनात्ओं ॥ ॥ गुहांप्रविष्टौपिबंतौविष्णुरू
पेएव । घर्मासमंतात्त्रिवृतंव्यापतुस्तयोर्जुष्टिंमातरिश्वाजगामेत्यादिनातद्दर्शनात् । आत्मांतरात्मेतिहरिरेकए
वद्विधास्थितः । निविष्टोहृदयेनित्यंरसंपिबतिकर्मजमितिबृहत्संहितायां । शुभंपिबत्यसौनित्यंनाशुभंसहरिः
पिबेत् । पूर्णानन्दमयस्यास्यचेष्टानज्ञायतेक्वचिदितिपाद्मे । योवेदनिहितंगुहायामित्यादिनाप्रसिद्धंहिशब्दे ॥ १२ ॥
नदर्शयति ॥ [११] ॥ ओंविशेषणाच्च[१२]ओं ॥ ॥ यःसेतुरीजानानामक्षरंब्रह्मतत्परमिति । पृथग्वक्तुंगुणास्तस्यन

शक्यंतेऽमितत्वतः। यतोतोब्रह्मशब्देनसर्वेषांग्रहणंभवेत्। एतस्माद्ब्रह्मशब्दोयंविष्णोरेवविशेषणं। अमिताहि गुणायस्मान्नान्येषांतमृतेविभुमितिब्राह्मे। नचजीवेसमन्वयोभिधीयते। सत्यआत्मासत्योजीवःसत्यंभिदासत्यंभिदासत्यंभिदामैवारुवण्योमैवारुवण्योमैवारुवण्यइतिपैंगिश्रुतिः।आत्माहिपरमःस्वतंत्रोधिगुणोजीवोल्पशक्तिरस्वतंत्रोऽवरइतिभाल्लवेयश्रुतिः। यथेश्वरस्यजीवस्यभेदःसत्योविनिश्चयात्। एवमेवहिमेवाचंसत्यांकर्तुमिहार्हसि। यथेश्वरश्चजीवश्चसत्यभेदौपरस्परं।तेनसत्येनमांदेवास्त्रायंतुसहकेशवाइत्यादेर्नासत्योभेदः॥ १२/३ ॥ आदित्येविष्णुरित्युक्तं। यएषआदित्येपुरुषःसोहमस्मिसएवाहमस्मीत्यादावग्नीनामेवादित्यादिस्थत्वमुच्यते। अतोक्ष्यादित्ययोरैक्याद्यएषोंतरक्षणिपुरुषोदृश्यतइत्यत्राप्यग्निरेवोच्यते।अत स्तद्यथापुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यतइत्यग्निज्ञानादेवसर्वपापाश्लेषान्मोक्षोपपत्तिरिति।अतोऽब्रवीत्॥ ॥ॐ अंतरउपपत्तेःॐ॥ १३ ॥ चक्षुरंतस्थोविष्णुरेव। त्रिपादस्यामृतंदिवीत्यादिनातस्यैवामृतत्वाद्युपपत्तेः। ब्रह्मशब्दाद्युपपत्तेश्च। सोहमस्मीत्यादित्वंतर्याम्यपेक्षया। अंतर्यामिणमीशेशमपेक्ष्याहंत्वमित्यपि। सर्वेशब्दाःप्रयुज्यंतेसतिभेदेपिवस्तुष्वितिमहाकौर्मे॥ १३ ॥ ॐस्थानादिव्यपदेशाच्चॐ॥ १४ ॥ तद्यदस्मिन्सर्पिर्वोदकंवासिंच

तिवर्त्मनीएवगच्छतीत्यादिस्थानशक्तिः। वामनिर्भामनिरित्याद्यात्मशक्तिश्चोच्यते। तस्यह्येतल्लिंगं। सईशः सोसपत्नःसहरिःसपरःपरोवरीयान्यदिदंचक्षुषिसर्पिर्वोदकंवासिंचतिवर्त्मनीएवगच्छतिसवामनःसभामनः सआनंदःसोच्युतइतिचतुर्वेदशिखायां। यत्स्थानत्वादिदंचक्षुरसंगंसर्ववस्तुभिः। सवामनःपरोस्माकंगतिरि त्येवचिंतयेदितिवामने॥ [14]॥ ॐ[15]सुखविशिष्टाभिधानादेवच ॐ॥ ॥प्राणोब्रह्मकंब्रह्मखंब्रह्मेति। विज्ञानमानंदं ब्रह्म। आनंदोब्रह्मेतिव्यजानादित्यादेस्तस्यैवहितल्लक्षणं। लक्षणंपरमानंदोविष्णोरेवनसंशयः। अव्यक्तादि तृणांतास्तुविप्रुडानंदभागिनइतिब्रह्मवैवर्ते। नचमुख्येसत्यमुख्यंयुज्यते॥ [15]॥ ॐ[16]श्रुतोपनिषत्कगत्यभिधाना च्च ॐ॥ ॥सएनान्ब्रह्मगमयतीति। नह्यन्यविद्ययाअन्यगतिर्युक्ता॥ [16]॥ ॐ[17]अनवस्थितेरसंभवाच्चनेतरः ॐ॥ जीवस्यजीवांतरनियामकत्वेअनवस्थितेः। साम्यादसंभवाच्चनजीवः। नियमेप्रमाणाभावात्। अनीश्वरापेक्ष त्वाच्च॥ [17]॥ यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमंतरोयमयत्येषतआ त्मांतर्याम्यमृतइत्यादिनांतर्याम्युच्यते। तत्रचैतदमृतमित्युक्तममृतत्वमुच्यते। सचयस्यपृथिवीशरीरमित्या दिनासर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवोवायुक्तः।नहिविष्णोःपृथिव्यादिशरीरत्वमंगीक्रियतइत्यतआह॥ ॥ॐ

अं[१८]तर्याम्यधिदैवादिषुतद्धर्मव्यपदेशात्ॐ ॥ ॥ यंपृथिवीनवेदयःपृथिव्याअंतरइत्यादिनाअधिदैवादिषुतद्ध
र्मव्यपदेशाद्विष्णुरेवांतर्यामी। सहि नतेविष्णोजायमानोनजातः सयोऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽवि
ज्ञातोऽनादिष्टःसर्वेषांभूतानामंतरपुरुषइत्यादिनाअविदितोंतरश्च ॥[१८]॥ ॐ[१९]नचस्मार्तमतद्धर्माभिलापात्ॐ
॥ ॥त्रिगुणत्वादिप्रधानधर्मानुक्तेर्नस्मृत्युक्तंप्रधानमंतर्यामी॥[१९]॥ॐ[२०]शारीरश्चोभयेपिहिभेदेनैनमधीयतेॐ॥
यआत्मनितिष्ठन्नात्मनोंतरोयमात्मानवेदयस्यात्माशरीरंयआत्मानमंतरोयमयत्येषतआत्मांतर्याम्यमृतः।यो
विज्ञानेतिष्ठन्विज्ञानादंतरोयंविज्ञानंनवेदयस्यविज्ञानंशरीरमित्युभयेपिहिशाखिनोभेदेनैनंजीवमधीयते ।
शीर्यतेनित्यमेवास्माद्विष्णोस्तुजगदीदृशं। रमतेचपरोह्यस्मिन्शरीरंतस्यतज्जगदितिवचनान्नशरीरत्वविरो
धः॥[२०]॥अदृश्यत्वादिगुणाविष्णोरुक्ताः।तत्र यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंवि
भुंसर्वगतंसुसूक्ष्मंतदव्ययंयद्भूतयोनिंपरिपश्यंतिधीराइत्युक्ता यथोर्णनाभिःसृजतेगृह्णतेचयथापृथिव्यामोषध
यःसंभवंति।यथासतःपुरुषात्केशलोमानितथाक्षरात्संभवतीहविश्वमित्युक्तातस्माच्चाक्षरात्परतःपरइतिपरः
प्रतीयतइत्यतोब्रवीत्॥ ॥ ॐ[२१]अदृश्यत्वादिगुणकोधर्मोक्तेःॐ ॥ ॥ पृथिव्यादिदृष्टांतमुक्ता अक्षरात्संभवती

हविश्वमित्यतःपरंतत्परतःपराभिधानात् कूटस्थोक्षरउच्यतइतिस्मृतेश्चप्रकृतेःप्राप्तिः। ब्रह्मशब्दात्तत्परतःपरा
भिधानादेवचहिरण्यगर्भस्य।तमेवंविद्वानमृतइहभवति।तत्कर्महरितोषंयत्साविद्यातन्मतिर्यया। अथद्वेवाव
विद्येवेदितव्येपराचैवापराच।तत्रयेवेदायान्यंगानियान्युपांगानियानिप्रत्यंगानिसाऽपरा। अथपराययासह
रिर्वेदितव्योयोसावदृश्योनिर्गुणःपरःपरात्मेत्यादिनातद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वा
दिगुणकः॥ [२१] ॥ ॐ[२२]विशेषणभेदव्यपदेशाभ्यांचनेतरौॐ॥ ॥ यःसर्वज्ञःसर्वविद्यस्यज्ञानमयंतपइतिविशेषणा
न्नप्रकृतिः। तस्मादेतद्ब्रह्मनामरूपमन्नंचजायतइतिभेदव्यपदेशान्नविरिंचः।अपरंत्वक्षरंयासाप्रकृतिर्जडरूपि
का। श्रीःपराप्रकृतिःप्रोक्ताचेतनाविष्णुसंश्रया। तामक्षरंपरंप्राहुःपरतःपरमक्षरं।हरिमेवाखिलगुणमक्षरत्रय
मीरितमितिस्कांदे त्र्यक्षराभिधानादक्षरात्परतःपरइत्यपिविशेषणमेव। जुष्टंयदापश्यत्यन्यमीशमस्यमहि
मानमितिवीतशोकइतिभेदव्यपदेशादीशपदप्राप्तोपिनरुद्रः॥ [२२] ॥ॐ[२३]रूपोपन्यासाच्चॐ॥ ॥यदापश्यःपश्य
तेरुक्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिमिति। एकोनारायणआसीन्नब्रह्मानचशंकरः। समुनिर्भूत्वासमचिंत
यत्ततएतेव्यजायंत। विश्वोहिरण्यगर्भोग्निर्यमोवरुणरुद्रेंद्राइति। तस्यहैतस्यपरमस्यनारायणस्यचत्वारिरू

पाणि शुक्लंरक्तंरौक्मंकृष्णमिति । सएतान्येतेभ्योऽभ्यचीक्लृपत् । विमिश्राणिव्यमिश्रयत् । अतएतादृगेतद्रूपमितितस्यैवहिरूपाण्यभिधीयंते ॥[२३]॥ अदृश्यत्वादिगुणेषुसर्वगतत्वमुक्तं यस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानंवैश्वानरमुपास्तइतिवैश्वानरस्योक्तमित्यतआह॥ ॥ ॐ[२४]वैश्वानरःसाधारणशब्दविशेषात्ॐ ॥ ॥ अग्नाविष्ण्वोःसाधारणस्यवैश्वानरशब्दस्यविष्णावेवप्रसिद्धात्मशब्देनविशेषणाद्वैश्वानरोविष्णुरेव॥[२४]॥ॐ[२५]स्मर्यमाणमनुमानंस्यादितिॐ ॥ ॥ अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितइतिस्मर्यमाणमत्रापिसएवोच्यतइत्यस्यानुमापकं । समाख्यानात् । इतिशब्दःसमाख्याप्रदर्शकः ॥[२५]॥ ॐ[२६]शब्दादिभ्योंतःप्रतिष्ठानान्नेतिचेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषविधमपिचैनमधीयतेॐ॥ ॥अयमग्निर्वैश्वानरः।वैश्वानरमृतआजातमग्निमित्यादिशब्दः।वैश्वानरेतच्छ्रुतंभवति।हृदयंगार्हपत्योमनोन्वाहार्यपचनआस्यमाहवनीयइत्याद्यग्निलिंगमादिशब्दोक्तं। येनेदमन्नंपच्यतेतद्यद्भक्तंप्रथममागच्छेत्तद्धोमीयमित्यादिनापाचकत्वेनांतःप्रतिष्ठानंचप्रतीयते । तस्मान्नविष्णुरितिचेन्न। अथहेममात्मानमणोरणीयांसंपरतःपरंविश्वंहरिमुपासीतेति सर्वनामासर्वकर्मासर्वलिंगः सर्वगुणःसर्वकामःसर्वधर्मःसर्वरूपइति सयएतमेवमात्मानंविश्वंहरिमारादरमुपास्ते तस्यसर्वेषुलोकेषुसर्वेषु

भूतेषुसर्वेषुदेवेषुसर्वेषुवेदेषुकामचारोभवतीति तत्तन्नामलिंगादिनातस्यैवदृष्ट्युपदेशान्महोपनिषदि । अनादित्वादनात्मानऊनत्वाद्गुणराशितः । अब्रह्माणःपरेसर्वेब्रह्मात्माविष्णुरेवहीत्यादिना कोनआत्माकिंब्रह्मेत्यारंभाच्चान्येषामसंभवाद्विष्णुरेववैश्वानरः। चंद्रमामनसोजातश्चक्षोःसूर्योअजायतेत्यादिनायःपुरुषाख्योविष्णुरभिहितःतद्विधमेवात्रमूर्धैवसुतेजाश्चक्षुर्विश्वरूपःप्राणःपृथग्वर्त्मेत्यादिनेनंवैश्वानरमधीयते । चशब्देनसकलवेदतंत्रपुराणादिषुविष्णुपरत्वंपुरुषसूक्तस्यदर्शयति । तथाचब्राह्मे यथैवपौरुषंसूक्तंनित्यंविष्णुपरायणं । तथैवमेमनोनित्यंभूयाद्विष्णुपरायणमिति । चतुर्वेदशिखायांच सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपादित्येषह्येवाचिंत्यःपरःपरमोहरिरादिरनादिरनंतोऽनंतशीर्षोऽनंताक्षोऽनंतबाहुरनंतगुणोऽनंतरूपइति। बृहत्संहितायांच यथाहिपौरुषंसूक्तंविष्णोरेवाभिधायकं । नतथासर्ववेदाश्चवेदांगानिचनारदेत्यादि । यस्माद्यज्जायतेचांगाल्लोकवेदादिकंहरेः । तन्नामवाच्यमंगंतद्यथाब्रह्मादिकंमुखमितिनारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥

ॐअतएवनदेवताभूतंचॐ ॥ ॥अग्निवैश्वानरादिशब्दस्तेजसिभूतेअग्निदेवतायांचप्रसिद्धोप्यतःपूर्वोक्तहेतुतएवात्रनसातच्चाभिधीयते ॥ २७ ॥ ॐसाक्षादप्यविरोधंजैमिनिःॐ ॥ ॥ नाम्न्यादयःशब्दाअग्न्यादिवाचकाः ।

तथापिसाक्षादेवानन्ययोगेनब्रह्मवाचकैःशब्दैर्व्यवहारार्थमनभिज्ञानाच्चान्यत्रव्यवहरंतीत्यभ्युपगमेअविरोधं जैमिनिर्वक्ति।व्यासचित्तस्थिताकाशादवच्छिन्नानिकानिचित् । अन्येव्यवहरंत्येतान्यूरीकृत्यगृहादिवदिति स्कांदवचनान्नमतानांपरस्परविरोधः॥ [२८] ॥ ॐ[२९]अभिव्यक्तेरित्याश्मरथ्यःॐ ॥ ॥ तत्रतत्रप्रसिद्धावप्यग्न्यादिषु ब्रह्मणोभिव्यक्तेरग्न्यादिसूक्तनियमइत्याश्मरथ्यः॥ [२९] ॥ॐ[३०]अनुस्मृतेर्बादरिःॐ ॥ ॥तत्रतत्रोक्तस्यविष्णोरग्न्या दिषुअनुस्मर्यमाणत्वात्तन्नियमइतिबादरिः ॥ [३०] ॥ ॐ[३१]संपत्तेरितिजैमिनिस्तथाहिदर्शयतिॐ ॥ ॥ साक्षादप्य विरोधंवदन्जैमिनिःसूक्तादिनियममग्न्यादिसंप्राप्त्यामन्यते।तंयथायथोपासतेतदेवभवतीतिदर्शयति ॥ [३१] ॥ नह्यन्योपासकोन्यंप्राप्नुतइतियुज्यतइत्यतआह ॥ ॥ ॐ[३२]आमनंतिचैनमस्मिन्ॐ ॥ ॥ एनंविष्णुमस्मिन्नग्न्या दावामनंति । योग्नौतिष्ठन्यएषएतस्मिन्नग्नौतेजोमयोऽमृतमयःपुरुषइत्यादिना ॥ [३२][७] ॥ ॥ इतिश्रीमत्कृष्णद्वै पायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाध्यायस्यद्वितीयःपादः ॥१॥ २ ॥

ॐ ॥ तत्रचान्यत्रचप्रसिद्धानांशब्दानांविष्णौसमन्वयंप्रायेणास्मिन्पादेदर्शयति । विष्णोःपरविद्याविषयत्व मुक्तं । तत्रयस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनःसहप्राणैश्चसर्वैस्तमेवैकंजानथआत्मानमित्यत्रप्राणानांग्रंथिर

ब्रह्मसू० सिरुद्रोमाऽऽविशांतकःप्राणेश्वरःकृत्तिवासाःपिनाकीत्यादिनारुद्रस्यप्राणाधारत्वप्रतीतेः।सएषोंतश्चरतेबहुधा भाष्यं.
॥ १४ ॥ जायमानइतिजीवलिंगाच्चतयोःप्राप्तिरित्यतआह॥ ॥ॐ[1]द्युभ्वाद्यायतनंस्वशब्दात्ॐ॥ ॥ तमेवैकंजानथआ प्र. तृ.
त्मानमित्यात्मशब्दात्द्युभ्वाद्याश्रयोविष्णुरेव। आत्मब्रह्मादयःशब्दास्तमृतेविष्णुमव्ययं । नसंभवंतियस्मा १।३
त्तेनैवाप्तागुणपूर्णतेतिब्रह्मवैवर्ते॥ [1] ॥ ॐ[2]मुक्तोपसृप्यव्यपदेशात्ॐ॥ ॥ अमृतस्यैषसेतुरिति । ब्रह्मविदाप्नो
तिपरं। नारायणंमहाज्ञेयंविश्वात्मानंपरायणं।मुक्तानांपरमागतिः। एतमानंदमयमात्मानमुपसंक्रामतीत्या
दिनातस्यैवमुक्तप्राप्यत्वव्यपदेशात्। बहुनात्रकिमुक्तेनयावच्छ्वेतंनगच्छति। योगीतावन्नमुक्तःस्यादेषशा
स्त्रस्यनिर्णयइत्यादित्यपुराणे॥ [2] ॥ ॐ[3]नानुमानमतच्छदात्ॐ ॥ ॥ नानुमानात्मकागमपरिकल्पितरुद्रोत्रवा
च्यः।भस्मधरोग्रत्वादितच्छब्दाभावात्। सोंतकःसरुद्रःसप्राणभृत्सप्राणनायकःसईशोयोहरिर्योनंतोयोविष्णु
र्यःपरःपरोवरीयानित्यादिनाप्राणग्रंथिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्। ब्रह्मांडेच रुजंद्रावयतेयस्माद्रुद्रस्तस्माज्ज
नार्दनः।ईशनादेवचेशानोमहादेवोमहत्त्वतः पिबंतियेनरानाकंमुक्ताःसंसारसागरात्। तदाधारोयतोवि ॥ ९६ ॥
ष्णुःपिनाकीतिततःस्मृतः। शिवःसुखात्मकत्वेनशर्वःशंरोधनाद्धरिः। कृत्यात्मकमिदंदेहंयतोवस्तेप्रवर्तय

न्। कृत्तिवासास्ततोदेवोविरिंचश्चविरेचनात्। बृंहणाद्ब्रह्मनामासावैश्वर्यादिंद्रउच्यते। एवंनानाविधैःशब्दैरे
कएवत्रिविक्रमः। वेदेषुसपुराणेषुगीयतेपुरुषोत्तमइति। वामनेच नतुनारायणादीनांनाम्नामन्यत्रसंभवः।
अन्यनाम्नांगतिर्विष्णुरेकएवप्रकीर्तितइति। स्कांदेच ऋतेनारायणादीनिनामानिपुरुषोत्तमः। प्रादादन्य
त्रभगवान्राजेवर्तेस्वकंपुरमिति। चतुर्मुखःशतानंदोब्रह्मणःपद्मभूरिति। उग्रोभस्मधरोनग्नःकपालीतिशिव
स्यच। विशेषनामानिददौस्वकीयान्यपिकेशवइतिब्राह्मे ॥[3]॥ ॐप्राणभृच्चॐ[4] ॥ ॥ एतैरेवहेतुभिर्नजीवो
वायुश्च। अजायमानोबहुधाविजायतइतितस्यैवबहुधाजन्मोक्तेः ॥[4]॥ ॐभेदव्यपदेशात्ॐ[5] ॥ ॥ नचैक्यं
वाच्यं। जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमितिभेदव्यपदेशात् ॥[5]॥ ॐप्रकरणात्ॐ[6] ॥ ॥ द्वेविद्येवेदित
व्येइतितस्यह्येतत्प्रकरणं ॥[6]॥ ॐस्थित्यदनाभ्यांचॐ[7] ॥ ॥ द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्व
जाते। तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतीतिजीवेशयोःस्थित्यदनोक्तेः ॥[7]॥ प्राणोवाआ
शायाभूयानित्युक्त्वायोवैभूमातत्सुखमित्युक्तेस्तस्यैवभूमत्वप्राप्तिः। उत्क्रांतप्राणानित्यादितल्लिंगात्प्राणशब्दश्च
वायुवाचीत्यतोवक्ति ॥ ॥ ॐभूमासंप्रसादादध्युपदेशात्ॐ ॥ ॥ संप्रसादात्पूर्णसुखरूपत्वात्अध्युपदेशात्स

ब्रह्मसू० वैषामुपर्युपदेशाच्चविष्णुरेवभूमा। सहस्रशीर्षं देवंविश्वाक्षंविश्वशंभुवं। विश्वंनारायणंदेवमक्षरंपरमंपदं। विश्व भाष्यं.
॥ १५ ॥ तःपरमांनित्यमितिहिश्रुतिः। तमुत्क्रामंतंप्राणोनूत्क्रामतीत्यादिनानोत्क्रमणादिलिंगविरोधोपि ॥ ८ ॥ ॐ[९]धर्मोप प्र. तृ.
पत्तेश्चॐ ॥ ॥ सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥ अदृश्यत्वादिगुणाविष्णोरुक्ताः अदृष्टंद्रष्टृश्रुतंश्रोत्रित्यादि ३।११
ना। अहंसोममाहनसंबिभर्मीत्यादेस्तस्यापिसंभवान्मध्यमाक्षरस्योक्ताइत्यतोब्रूते ॥ ॥ ॐ[१०]अक्षरमंबरांतधृतेः
ॐ ॥ ॥ एतस्मिन्खल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेत्यंबरांतस्यसर्वस्यधृतेर्ब्रह्मैवाक्षरं। यउत्रिधातुपृथिवीमु
तद्यामेकोदाधारभुवनानिविश्वा। भर्तासन्भ्रियमाणोबिभर्ति एकोदेवोबहुधासन्निविष्टः यदाभारंतंद्रयतेसभ
र्तुं निधायभारंपुनरस्तमेति। यस्मिन्निदंसंचविचैधिसर्वंयस्मिन्देवाअधिविश्वेनिषेदुरित्यादिश्रुतेः। पृथिव्या
दिप्रकृत्यंतंभूतंभव्यंभवच्चयत्। विष्णुरेकोबिभर्तीदंनान्यस्तस्मात्क्षमोधृताविति स्कांदे ॥ १० ॥ ॐ[११]साचप्रशास
नात्ॐ ॥ ॥ साचधृतिःप्रशासनादुच्यते। एतस्यवाअक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतइत्या
दिना। तच्चप्रशासनंविष्णोरेव। सप्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्मणि। चतुर्भिःसाकंनव ॥ १७ ॥
तिंचनामभिश्चक्रंनवृत्तंव्यतींरवीविपदित्यादिश्रुतेः एकःशास्तानद्वितीयोस्तिशास्तायोहृच्छयस्तमहमिहप्र

वीमि । नकेवलंमेभवतश्चराजन्सर्वैबलंवलिनांचापरेषामित्यादेश्च ॥ ११ ॥ ॐअन्यभावव्यावृत्तेश्चॐ॥ ॥अस्थूलमनण्वित्यादिनास्थूलाण्वादीनामन्यवस्तुस्वभावानांव्यावृत्तेश्च । अस्थूलोऽनणुरमध्यमोमध्यमोऽव्यापकोव्यापकोयोसौहरिरादिरनादिरविश्वोविश्वःसगुणोनिर्गुणइत्यादेर्विष्णोरेवहितेधर्माः।अस्थूलोऽनणुरूपोसावविश्वोविश्वएवच । विरुद्धधर्मरूपोसावैश्वर्यात्पुरुषोत्तमइत्यादिब्राह्मे ॥ १२ ॥ सदेवसोम्येदमग्रआसीदित्यादिनासतःस्रष्टृत्वमुच्यते । तच्चसत् बहुस्यांप्रजायेयेतिपरिणामप्रतीतेर्नविष्णुः । सह्यविकारःसदाशुद्धोनित्यआत्मासदाहरिरित्यादिनाअविकारःप्रसिद्धइत्यतोब्रवीति ॥ ॥ ॐईक्षतिकर्मव्यपदेशात्सःॐ॥ ॥तदैक्षतेतीक्षतिकर्मव्यपदेशात्सएवविष्णुरत्रोच्यते । नान्योतोस्तिद्रष्टानान्यदतोस्तिद्रष्ट्रित्यादिनातस्यैवहितल्लक्षणं । बहुत्वंचाविकारेणैवोक्तंअजायमानोबहुधाविजायतइति॥ १४ ॥चंद्रादित्याद्याधारत्वंविष्णोरुक्तं । तच्च अथयदिदमस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरोस्मिन्नंतरआकाशःकिंतदत्रविद्यतेउभेअस्मिन्द्यावापृथिवीअंतरेवसमाहिते।उभावग्निश्चवायुश्चसूर्याचंद्रमसावुभौ । विद्युन्नक्षत्राणीत्यादिनाऽऽकाशस्यप्रतीयते । सचाकाशोनविष्णुः । तस्यांतेसुषिरंसूक्ष्मंतस्मिन्सर्वंप्रतिष्ठितमितिश्रुतेरित्यतआह ॥ ॥ ॐदहरउत्तरेभ्यःॐ ॥ ॥यआत्मापहतपा

प्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः सोन्वेष्टव्यः सविजिज्ञासितव्यइत्यादि
भ्यउत्तरेभ्योगुणेभ्योदहरेविष्णुरेव ।योशनायापिपासेशोकंमोहंजरांमृत्युमत्येति।सएषसर्वेभ्यःपाप्मभ्यउदित
इत्यादिनाविष्णोरेवहितेगुणाः। नित्यतीर्णाशनायादिरेकएवहरिःस्वतः । अशनायादिकानन्येतत्प्रसादात्त
रंतिहीतिपाद्मे । सापेक्षनिरपेक्षयोश्चनिरपेक्षंस्वीकर्तव्यं । सत्यकामःपरोनास्तितस्मृतेविष्णुमव्ययं । सत्यकाम
त्वमन्येषांभवेत्तत्काम्यकामितेतिस्कांदे॥ [१४] ॥ ॐ [१५] गतिशब्दाभ्यांतथाहिदृष्टंलिंगंच ॐ॥ ॥ अहरहर्गच्छंत्यए
तंब्रह्मलोकंनविंदतीतिसुप्तस्यतद्गतिर्ब्रह्मशब्दश्चोच्यते । सतासोम्यतदासंपन्नोभवतीतिश्रुतेस्तंहिसुप्तोगच्छ
ति । अरश्चहवैण्यश्चार्णवौब्रह्मलोकइतिलिंगंचतथाहिदृष्टं। अरश्चवैण्यश्चसुधासमुद्रौतत्रैवसर्वाभिमतप्रदौद्वा
वित्यादिनातस्यैवहितलक्षणत्वेनोच्यते ॥ [१५] ॥ ॐ [१६] धृतेश्चमहिम्नोस्यास्मिन्नुपलब्धेः ॐ ॥ ॥ एषसेतुर्विधृतिरि
तिधृतेः । एषभूताधिपतिरेषभूतपालइत्याद्यस्यमहिम्नोस्मिन्नुपलब्धेः । एतस्मिन्खल्वक्षरेगार्ग्याकाशओत
श्चप्रोतश्च । एतस्यवाअक्षरस्यप्रशासनेगार्गि । सहिसर्वाधिपतिःसहिसर्वपालस्सईशस्सविष्णुः । पतिंविश्व ॥ १८ ॥
स्यात्मेश्वरमित्यादिश्रुतिभ्यस्तस्यह्येषमहिमा । सर्वेशोविष्णुरेवैकोनान्योस्तिजगतःपतिरितिस्कांदे॥ [१६] ॥ ॐ [१७] प्र

सिद्धेश्चॐ ॥ ॥ तत्रापिदहरंगगनंविशोकस्तस्मिन्यदंतस्तदुपासितव्यमितिप्रसिद्धेश्च । तदंतस्थत्वापेक्षत्वान्नसुषिरश्रुतिविरोधः ॥[१७]॥ ॐ[१८]इतरपरामर्शात्सइतिचेन्नासंभवात्ॐ॥ ॥परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते एषआत्मेतिहोवाचेतिजीवपरामर्शात्सइतिचेन्न । तस्यस्वतोपहतपाप्मत्वाद्यसंभवात्॥[१८]॥ ॐ[१९]उत्तराच्चेदाविर्भूतस्वरूपस्तुॐ॥ ॥ सतत्रपर्येतिजक्षन्क्रीडन्रममाणइत्याद्युत्तरवचनाज्जीवएवेतिचेन्न। तत्रहिपरमेश्वरप्रसादादाविर्भूतस्वरूपोमुक्तउच्यते । यत्प्रसादात्समुक्तोभवतिसभगवान्पूर्वोक्तः ॥[१९]॥ ॐ[२०]अन्यार्थश्चपरामर्शःॐ॥ ॥ यंप्राप्यजीवःस्वेनरूपेणाभिनिष्पद्यतेसएषआत्मेतिपरमात्मार्थश्चपरामर्शः॥[२०]॥ॐ[२१]अल्पश्रुतेरितिचेत्तदुक्तंॐ ॥ ॥ दहरइत्यल्पश्रुतेरितिचेन्न । निचाय्यत्वादेवंव्योमवच्चेत्युक्तत्वात्। एषमआत्मांतर्हृदयेज्यायानितिश्रुत्युक्तत्वाच्च ॥[२१] ५॥ अदृश्यत्वादयःपरमेश्वरगुणाउक्ताःतेषांसुखंशाश्वतंनेतरेषां। तदेतदितिमन्यंतेऽनिर्देश्यंपरमंसुखमित्यादिनाज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वंचोच्यतइत्यतोवक्ति ॥ ॥ ॐ[२२]अनुकृतेस्तस्यचॐ ॥ ॥ तमेवभांतमनुभातिसर्वमित्यनुकृतेः तस्यभासासर्वमिदंविभातीतिवचनाच्चपरमात्मैवानिर्देश्यसुखरूपः । नहिज्ञानिसुखमनुभातिसर्वं नचतद्भासा । अहंतत्तेजोरश्मीदितिनारायणभासाहिसर्वंभाति

॥[२२]॥ ॐ[२३] अपिस्मर्यते ॐ ॥ ॥यदादित्यगतंतेजोजगद्भासयतेऽखिलं । यच्चन्द्रमसियच्चाग्नौतत्तेजोविद्धिमामक मिति।नतद्भासयतेसूर्योनशशांकोनपावकः। यद्गत्वाननिवर्ततेतद्धामपरमंममेतिच ॥[२३]६॥ विष्णुरेवजिज्ञास्य इत्युक्तं । तत्र ऊर्ध्वंप्राणमुन्नयत्यपानंप्रत्यगस्यति । मध्येवामनमासीनंविश्वेदेवाउपासतेइतिसर्वदेवोपास्यः कश्चित्प्रतीयते।सच एवमेवैषप्राणइतरान्प्राणान्पृथक्पृथगेवसन्निधत्ते । योयंमध्यमःप्राणः कुविदंगेत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्चवायुरेवेतिप्रतीयते। अतोब्रवीत् ॥ ॥ ॐ[२४] शब्दादेवप्रमितः ॐ ॥ ॥ वामनशब्दादेवविष्णुरितिप्रमितः।नहिश्रुतेर्लिंगंबलवत् । श्रुतिर्लिंगंसमाख्याचवाक्यंप्रकरणंतथा। पूर्वंपूर्वंबलीयःस्यादेवमागमनिर्णयइतिस्कांदे। तच्चलिंगंविष्णोरेव । तस्यैवप्राणत्वोक्तेः तद्धैत्वंप्राणोअभवइ ति॥[२४]॥ ॐ[२५] हृद्यपेक्षयातुमनुष्याधिकारत्वात् ॐ ॥ ॥ सर्वगतस्यापितस्यांगुष्ठमात्रत्वंहृद्यवकाशापेक्षयायुज्य ते । इतरप्राणिनामंगुष्ठाभावेपिमनुष्याधिकारत्वान्नविरोधः ॥ ७॥ मनुष्याणामेववेदविद्याधिकारइत्युक्तं । तिर्यगाद्यपेक्षयैवमनुष्यत्वविशेषणमुक्तंनतुदेवाद्यपेक्षयेत्याह ॥ ॥ ॐ[२६] तदुपर्यपिबादरायणःसंभवात् ॐ ॥ ॥ ॥ ९९ ॥
तदुपरि मनुष्याणांसतांदेवादित्वप्राप्त्युपरि । संभवतिहितेषांविशिष्टबुद्ध्यादिभावात्। तिर्यगादीनांतदभावा

द्भावः।तेषामपियत्रविशिष्टबुद्ध्यादिभावस्तत्राविरोधः। निषेधाभावात्। दृश्यंतेहिजरितार्यादयः॥ २६ ॥ॐवि
रोधः२७ कर्मणीतिचेन्नानेकप्रतिपत्तेर्दर्शनात्ॐ॥ ॥मनुष्याएवदेवादयोभवंतीतितदुपरीत्युक्तं। तत्रयदिमनु
ष्याःसंतोदेवादयोभवंतितत्पूर्वंदेवताभावाद्देवतोद्दिष्टकर्मणिविरोधइतिचेन्न। अनेकेषांदेवतापदप्राप्तेर्दर्शना
त्। तेहनाकंमहिमानःसचंते यत्रपूर्वेसाध्याःसंतिदेवाइति॥ २७ ॥ ॐ२८शब्दइतिचेन्नातःप्रभवात्प्रत्यक्षानुमाना
भ्यांॐ॥ ॥वाचाविरूपनित्ययेत्यादिश्रुतेरास्यनिश्चयान्नित्यत्वापेक्षत्वाच्चमूलप्रमाणस्यस्वतःप्रामाण्यसिद्धेश्च
नित्यत्वाद्वेदस्यतदुदितानांदेवानामनित्यत्वात्पुनरन्यभावनियमाभावाच्चशब्देविरोधइतिचेन्न। सूर्याचंद्रम
सौधातायथापूर्वमकल्पयत्। यथैवानियमःकालेसुरादिनियमस्तथा। तस्मान्नानीदृशंक्वापिविश्वमेतद्भविष्यती
त्यादेरतएवशब्दात्तेषांप्रभवनियमात्महतांप्रत्यक्षात्। यथेदानींतथोपर्यपिदेवाभविष्यंतीतीतरेषामनुमाना
च्च॥ २८ ॥ॐअ२९तएवचनित्यत्वंॐ॥ ॥अतएवशब्दस्यनित्यत्वादेवचदेवप्रवाहस्यनित्यत्वंयुक्तं॥ २९ ॥ॐ३०समानना
मरूपत्वाच्चावृत्तावप्यविरोधोदर्शनात्स्मृतेश्चॐ॥ ॥अतीतानागतानांदेवानांसमाननामरूपत्वात्प्राप्तपदानां
मुक्त्यावृत्तावप्यविरोधः। यथापूर्वमितिदर्शनात्। अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा। ऋषीणांनामधे

यानियाश्चवेदेषुदृष्टयः। वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरइतिस्मृतेश्च ॥[३०]॥ ॐ[३१]मध्वादिष्वसंभवादनधिका
रंजैमिनिःॐ ॥ ॥ वसूनामेवैकोभूत्वेत्यादिनाप्राप्यफलत्वात्प्राप्तपदानांदेवानांमध्वादिविद्यास्वनधिकारंजै
मिनिर्मन्यते ॥[३१]॥ ॐ[३२]ज्योतिषिभावाच्चॐ ॥ ॥ ज्योतिषिसर्वज्ञत्वेभावाच्च। आदित्यप्रकाशेंतर्भाववत्तज्ज्ञाने
सर्ववस्तूनामंतर्भावान्नित्यसिद्धत्वाच्चविद्यानां ॥[३२]॥ ॐ[३३]भावंतुबादरायणोस्तिहिॐ॥ ॥ फलविशेषभावात्प्रा
प्तपदानामपिदेवानांमध्वादिष्वधिकारंबादरायणोमन्यते। अस्तिहिप्रकाशविशेषः। यावत्सेवापरेतत्त्वेताव
त्सुखविशेषता। संभवाच्चप्रकाशस्यपरमेकमृतेहरिं। तेषांसामर्थ्ययोगाच्चदेवानामप्युपासनं। सर्वंविधीयते
नित्यंसर्वयज्ञादिकर्मचेतिस्कांदे। उक्तफलानधिकारमात्रंजैमिनिमतं। अतोनतन्मतविरोधः। सर्वज्ञस्यैवकृष्ण
स्यत्वेकदेशविचिंतितं। स्वीकृत्यमुनयोब्रूयुस्तन्मतंनविरुध्यतइतिब्राह्मे ॥[३३]॥ मनुष्याधिकारत्वादित्युक्तेऽवि
शेषाच्छूद्रस्याप्यहहारेत्वाशूद्रेतिपौत्रायणोक्तेरधिकारइत्यतआह ॥ ॥ ॐ[३४]शुगस्यतदनादरश्रवणात्तदाद्रव
णात्सूच्यतेहिॐ ॥ ॥ नासौपौत्रायणःशूद्रः। शुचाऽऽद्रवणमेवशूद्रत्वं। कम्वरएनमेतत्संतमित्यनादरश्रवणा
त्। सहसंजिहानएवक्षत्तारमुवाचेतिसूच्यतेहि॥[३४]॥ॐ[३५]क्षत्रियत्वावगतेश्चोत्तरत्रचैत्ररथेनलिंगात्ॐ॥ अथ ॥१००॥

मश्वतरीरथइतिचित्ररथसंबंधित्वेनालिंगेनपौत्रायणस्यक्षत्रियत्वावगतेश्च । रथस्त्वश्वतरीयुक्तश्चित्रइत्यभिधीयतइतिब्रह्मांडे । यत्रवेदोरथस्तत्रनवेदोयत्रनोरथइतिब्रह्मवैवर्ते ॥[३५]॥ ॐ[३६]संस्कारपरामर्शात्तदभावाभिलापाच्चॐ ॥ ॥ अष्टवर्षंब्राह्मणमुपनयीततमध्यापयीतेत्यध्ययनार्थंसंस्कारपरामर्शात् ॥ नाग्निर्नयज्ञोनक्रियानसंस्कारोनव्रतानिशूद्रस्येतिपैंगिश्रुतौसंस्काराभावाभिलापाच्च । उत्तमस्त्रीणांतुनशूद्रवत् । सपत्नींमेपराधमेत्यादिष्वधिकारदर्शनात् । संस्काराभावेनाभावस्तुसामान्येन । अस्तिचतासांसंस्कारः । स्त्रीणांप्रदानकर्मैवयथोपनयनंतथेतिस्मृतेः ॥[३६]॥ ॐ[३७]तदभावनिर्धारणेचप्रवृत्तेःॐ ॥ ॥ नाहमेतद्वेदभोयद्गोत्रोहमस्मीतिसत्यवचनेनसत्यकामस्यशूद्रत्वाभावनिर्धारणेहारिद्रुमतस्यनैतदब्राह्मणोविवक्तुमर्हतीतितत्संस्कारेप्रवृत्तेश्च ॥[३७]॥ ॐ[३८]श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्चॐ ॥ ॥ श्रवणेत्रपुजतुभ्यांश्रोत्रपरिपूरणंअध्ययनेजिह्वाच्छेदः । अर्थावधारणेहृदयविदारणमितिप्रतिषेधात् । नाग्निर्नयज्ञःशूद्रस्यतथैवाध्ययनंकुतः । केवलैवतुशुश्रूषात्रिवर्णानांविधीयतइतिस्मृतेश्च । विदुरादीनांतूत्पन्नज्ञानत्वान्नकश्चिद्विशेषः ॥[३८]॥ यदिदंकिंचजगत्सर्वंप्राणएजतिनिःसृतं । महद्भयंवज्रमुद्यतंयएतद्विदुरमृतास्तेभवंतीत्युद्यतवज्रज्ञानान्मोक्षःश्रूयतइत्यतोब्रवीत् ॥ॐ[३९]कंपनात्ॐ॥

एजतीतिकंपनवचनादुद्यतवज्रोभगवानेव । कोह्येवान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यादितिहिश्रु
तिः।प्राणस्यप्राणमुतचक्षुषश्चक्षुरितिच। नभस्वतोपिसर्वाःस्युश्चेष्टाभगवतोहरेः।किमुतान्यस्यजगतोयस्यचे
ष्टानभस्वतइतिस्कांदे। चक्रंचक्रमणादेषवर्जनाद्वज्रउच्यते। खंडनात्खड्गएवैषहेतिनामास्वयंहरिरितिब्रह्मवैव
र्ते ॥ ३९ १० ॥ हृदयआहितंज्योतिःपरमात्मेत्युक्तं । तत्रयोयंविज्ञानमयःप्राणेषुहृद्यंतर्ज्योतिःपुरुषइत्यत्रोभौलो
कावनुसंचरतीतिवचनाज्जीवइतिप्रतीयतइत्यतउच्यते ॥ ॥ ॐज्योतिर्दर्शनात्ॐ ॥ ॥ विष्णुरेवज्योतिर्वि
ष्णुरेवब्रह्मविष्णुरेवात्माविष्णुरेवबलंविष्णुरेवयशोविष्णुरेवानंदइतिदर्शनाच्चतुर्वेदशिखायांज्योतिर्विष्णुरे
व। प्राज्ञेनात्मनान्वारूढउत्सर्जद्यातीतिवचनात्तस्यापिलोकसंचरणमस्त्येव॥४० ११॥ सर्वाधारत्वंविष्णोरुक्तं ।त
च्चाकाशोवैनामरूपयोर्निर्वहितेत्यत्राकाशस्यप्रतीयते। वैनामेतिप्रसिद्धोपदेशात्। प्रसिद्धाकाशश्चांगीकर्त
व्यइत्यतउच्यते ॥ ॥ ॐ४१आकाशोर्थांतरत्वादिव्यपदेशात्ॐ ॥ ॥ तेयदंतरातद्ब्रह्मेत्यर्थांतरत्वादिव्यपदेशा
दाकाशोहरिरेव।अवर्णं यतोवाचोनिवर्तंतइत्यादिश्रुतेस्तस्यैवहितलक्षणं। अनामासोप्रसिद्धत्वादरूपोभूत ॥१०१॥
वर्जनादितिब्राह्मे ॥ ४१ १२ ॥ असंगत्वंपरमात्मनउक्तं । तच्चसयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवति असं

गोह्ययंपुरुषइतिस्वप्नादिद्रष्टुःप्रतीयते । सचजीवःप्रसिद्धेरित्यतआह ॥ ॥ ॐसुषुप्त्युत्क्रान्त्योर्भेदेनॐ
॥ ॥ प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरं। प्राज्ञेनात्मनान्वारूढउत्सर्जद्यातीतिभेदव्यपदेशान्न
जीवःपरएवासंगः । स्वप्नादिद्रष्टृत्वंचसर्वज्ञत्वात्तस्यैवयुज्यते ॥ ४२ १३ ॥ एषनित्योमहिमाब्राह्मणस्येतिब्राह्मण
स्यापिनित्यमहिमाप्रतीयते । सचब्राह्मणःसवाएषमहानजआत्मेत्यजशब्दादिरिंचइतिप्राप्तं । देवानांचवि
द्याकर्मणोःपदप्राप्तिःसूचितातदुपर्यपीति । अतोऽब्रवीत् ॥ ॥ ॐपत्यादिशब्देभ्यःॐ ॥ ॥ सर्वस्याधिप
तिःसर्वस्येशानःसवाएषनेतिनेतीत्यादिशब्देभ्योनित्यमहिमाविष्णुरेव । उतामृतत्वस्येशानोयदन्नेनातिरो
हति । सप्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्मणि । सयोतोश्रुतइत्यादिश्रुतिभ्यस्तस्यैवहिते
शब्दाः ॥ ४३ १४ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथ
माध्यायस्यतृतीयःपादः ॥ १ ॥ ३ ॥ ॥ ॥ ॥ ॥
ॐ ॥ श्रुतिलिंगादिभिरन्यत्रैवप्रसिद्धानामपिशब्दानांसामस्त्येनविशेषहेतुभिर्विष्णावेवप्रवृत्तिंदर्शयत्यस्मि
न्पादे ॥ ॥ ॐआनुमानिकमप्येकेषामितिचेन्नशरीररूपकविन्यस्तगृहीतेर्दर्शयतिचॐ ॥ ॥ तत्तुसमन्वया

ब्रह्मसू० दितिसर्वशब्दानांपरमेश्वरेसमन्वयउक्तः । तन्नयुज्यते । यतोऽव्यक्तात्पुरुषःपरइतिसांख्यानुमानपरिकल्पितं भाष्यं.
॥ २० ॥ प्रधानमप्येकेषांशाखिनामुच्यतइतिचेन्न । तस्यैवपारतंत्र्याच्छरीररूपकेऽव्यक्तेविन्यस्तस्यपरमात्मनएवाव्य प्र. च.
क्तशब्देनगृहीतेः । कप्रत्ययःकुत्सने । परमात्मनएवाव्यक्तशब्दःतत्तंत्रत्वेनतच्छरीररूपत्वादितरस्याप्यव्यक्त १।५
शब्दः । तुच्छयेनाभ्वपिहितंयदासीदितिदर्शयतिच । अव्यक्तमचलंशांतंनिष्कलंनिष्क्रियंपरं । योवेदहरिमा
त्मानंसभयादनुमुच्यतइतिपिप्पलादशाखायां।अक्षरंब्रह्मपरममित्युक्त्वाअव्यक्तोक्षरउच्यतइतिवचनाच्च॥[1]॥
ॐ[2]सूक्ष्मंतुतदर्हत्वात्ॐ॥ ॥सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तद्ध्यव्यक्ततामर्हति । सूक्ष्मत्वंचमुख्यंतस्यैव । य
त्तत्सूक्ष्मंपरमंवेदितव्यंनित्यंपदंवैष्णवंह्यामनंति । यत्तलोकानविदुर्लोकसारंविंदंत्येतत्कवयोयोगनिष्ठाइति
पिप्पलादशाखायां । मुख्येचविद्यमानेनामुख्यंयुक्तं ॥[2]॥ ॐ[3]तदधीनत्वादर्थवत्ॐ ॥ ॥ तदधीनत्वाच्चाव्य
क्तत्वादीनांतस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् । यदधीनोगुणोयस्यतद्गुणीसोभिधीयते । यथाजीवःपरा
त्मेतियथाराजाजयीत्यपीतिस्कांदे॥ [3] ॥ॐ[4]ज्ञेयत्वावचनाच्चॐ ॥ ॥ अन्यस्यनवाच्यत्वंयुज्यते ॥[4]॥ ॐ[5]वं ॥१०२॥
दतीतिचेन्नप्राज्ञोहिॐ ॥ ॥ महतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यतइतिज्ञेयत्वंवदतीतिचेन्न । प्राज्ञःपर

मात्माहितत्रोच्यते । अणोरणीयान्महतोमहीयानितितस्यैवहिमहतोमहत्त्वं । सर्वस्मात्परस्यमहतोपिमहत्त्वं युज्यते ॥ ५ ॥ ॐ प्रकरणात् ॐ ॥ ॥ सोध्वनःपारमाप्नोतितद्विष्णोःपरमंपदमितितस्यह्येतत्प्रकरणं ॥ ६ ॥ ॐ त्रयाणामेवचैवमुपन्यासःप्रश्नश्च ॐ ॥ ॥ त्रयाणामेवपितृसौमनस्यस्वर्ग्याग्निपरमात्मनांप्रश्नउपन्यासश्च । अविज्ञातप्रार्थनंचप्रश्नइत्यभिधीयतइतिवचनान्नविरोधः ॥ ७ ॥ ॐ महद्वच्च ॐ ॥ ॥ यथामहच्छब्दोमहत्तत्वेप्रसिद्धोपिपरममहत्त्वात्परमात्मनएवमुख्यःएवमितरेपि ॥ ८ ॥ ॐ चमसवदविशेषात् ॐ ॥ ॥ यथाचमसशब्दोन्यत्रप्रसिद्धोपिइदंतच्छिरएषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नइतिश्रुतेःशिरोवाचकः एवमव्यक्तादिशब्दाःसर्वेऽन्यत्रप्रसिद्धाअपि नामानिसर्वाणियमाविशंतितंवैविष्णुंपरममुदाहरंतीत्यादिश्रुतेःपरमात्माभिधायकाएव । अविशेषाच्छ्रुतेः॥ ९ ॥वसंतेवसंतेज्योतिषायजेतेत्यादिकर्माभिधायकस्यकर्मक्रमादिविरोधान्नयुज्यतइत्यतआह ॥ ॥ ॐ ज्योतिरुपक्रमात्तुतथाह्यधीयतएके ॐ ॥ ॥ ज्योतिरादिकर्मवाचकत्वेनप्रसिद्धाभिधेयोपिसएव । एषइमंलोकमभ्यार्चदित्युपक्रम्यतावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाएकैवव्याहृतिःप्राणएवप्राणऋचइत्येवविद्यादितिह्यधीयतएके॥ १० ॥ ॐ कल्पनोपदेशाच्चमध्वादिवदविरोधः ॐ॥ ॥मधुविद्यादिवत्सर्वशब्दार्थत्वेन

परस्यकल्पनोपदेशाच्चनकर्मक्रमादिविरोधः ॥[११ २]॥ ॐ[१२]नसंख्योपसंग्रहादपिनानाभावादतिरेकाच्चॐ ॥ ॥ यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितइत्यादिषुबहुसंख्योपसंग्रहेपिनविरोधः । तस्यैवाकाशादिषुनानाभावात्तदतिरिक्तस्वरूपत्वाच्च ॥[१२]॥ पंचजनानाह ॥ ॥ ॐ[१३]प्राणादयोवाक्यशेषात्ॐ॥ ॥प्राणस्यप्राणमुतचक्षुषश्चक्षुःश्रोत्रस्यश्रोत्रमन्नस्यान्नंमनसोमनइतिवाक्यशेषात् ॥[१३]॥ ॐज्योतिषैकेषां[१४]मसत्यन्नेॐ ॥ ॥ तद्देवाज्योतिषांज्योतिरित्यनेनकाण्वानांपंचकं ॥[१४ ३]॥ अवांतरकारणत्वेनापिसएवोच्यतइतिवक्ति ॥ ॥ ॐ[१५]कारणत्वेनचाकाशादिषुयथाव्यपदिष्टोक्तेःॐ ॥ ॥ आकाशादिष्ववांतरकारणत्वेनसएवस्थितः । यथाव्यपदिष्टस्यैव परस्ययआकाशेतिष्ठन्नित्यादिनाआकाशादिषूक्तेः ॥[१५ ४]॥ सर्वशब्दानांपरमात्मवाचकत्वेकथमन्यत्रव्यवहार इत्यतोब्रवीत् ॥ ॥ ॐ[१६]समाकर्षात्ॐ ॥ ॥ परमात्मवाचिनःशब्दाःअन्यत्रसमाकृष्यव्यवह्रियंते । परस्यवाचकाःशब्दाःसमाकृष्येतरेष्वपि । व्यवह्रियंतेसततंलोकवेदानुसारतइतिपाद्मे ॥[१६]॥ तर्हिंकथंतेषांशब्दानांजगतिप्रसिद्धिः ॥ ॥ ॐ[१७]जगद्वाचित्वात्ॐ ॥ ॥ जगतिव्यवहारोलोकस्य । नतुपरमात्मनितथा।अतोजगतिप्रसिद्धिःशब्दानां ॥[१७]॥ ॐजीव[१८]मुख्यप्राणलिंगादितिचेत्तद्व्याख्यातंॐ । तदधीनत्वात्तच्छब्दवाच्यत्वमित्यु

क्तं।तज्जीवमुख्यप्राणयोर्लिंगं। अस्ययदैकांशाखांजीवोजहात्यथसाशुष्यति। वायुनाहिसर्वैंलोकानेनीयंतइत्यादिश्रुतिभ्यइतिचेन्न।उपासात्रैविध्यादितिव्याख्यातत्वात् ॥ [१८]॥ ॐ[१९]अन्यार्थंतुजैमिनिःप्रश्नव्याख्यानाभ्यामपिचैवमेकेॐ॥ ॥ परमात्मज्ञानार्थंकर्मादिकमपिवदतीतिजैमिनिः। कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवतीति। तस्मैसहोवाचद्वेविद्येवेदितव्ये। कथंनुभगवःसआदेशोभवतीति। यथासोम्यैकेनमृत्पिंडेनेत्यादिप्रश्नव्याख्यानाभ्यां। एवमपिचैकेपठंति।यस्तन्नवेदकिमृचाकरिष्यतीति ॥ [१९]॥ ॐ[२०]वाक्यान्वयात्ॐ॥ ॥ वाक्यस्याप्येवमन्वयोयुज्यतेपृथक्पृथक्स्थितस्यापिपरमात्मना॥ [२०]॥ॐ[२१]प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यःॐ॥ ॥नान्यःपंथाअयनायविद्यतइतिप्रतिज्ञासिद्धेर्लिंगत्वेनकर्मादिकमुच्यतइत्याश्मरथ्यः। यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यःपंथाइति॥ [२१]॥ॐ[२२]उत्क्रमिष्यतएवंभावादित्यौडुलोमिःॐ॥ ॥उत्क्रमिष्यतोमुमुक्षोःकर्मादिनाभाव्यंसाधनत्वेन।अतस्तद्वक्तीत्यौडुलोमिर्मन्यते॥ [२२]॥ ॐ[२३]अवस्थितेरितिकाशकृत्स्नःॐ॥ ॥ सर्वंपरमात्मन्यवस्थितमितिवक्तुंतद्वचनमितिकाशकृत्स्नः। कृष्णद्वैपायनमतादेकदेशविदःपरे। वदंतितेयथाप्रज्ञंनविरोधःकथंचनेतिपाद्मे॥ [२३]॥ स्त्रीशब्दाअपितस्मिन्नेवेत्याह॥ ॥ॐ[२४]प्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधात्ॐ॥ ॥ हंतैतमेव

पुरुषंसर्वाणिनामान्यभिवदंति । यथानद्यःस्यन्दमानाःसमुद्रायणाःसमुद्रमभिविशंत्येवमेवैतानिनामानिस
र्वाणिपुरुषमभिविशंतीतिप्रतिज्ञादृष्टांतानुपरोधात्प्रकृतिशब्दवाच्योपिसएव ॥[२४]॥ ॐअभिध्योपदेशाच्चॐ
॥ ॥ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरं । महामायेत्यविद्येतिनियतिर्मोहिनीतिच । प्रकृतिर्वासनेत्येवं
तवेच्छानंतकथ्यतइतिवचनात्तदभिध्यैवप्रकृतिशब्देनोच्यते । सोभिध्यासजूतिःसप्रज्ञासआनंदइतिश्रुतेर
भिध्याचस्वरूपमेव । ध्यायतिध्यानरूपोसौसुखीसुखमतीवच । परमैश्वर्ययोगेनविरुद्धार्थतयेष्यतइतिब्रह्मां
डे ॥[२५]॥ ॐसाक्षाच्चोभयाम्नानात्ॐ ॥ ॥ एषह्येषपुरुषएषप्रकृतिरेषआत्मैषब्रह्मैषलोकएषआलोकोयोसौह
रिरादिरनादिरनंतोंतःपरमःपराद्धिश्वरूपइतिपैंगिश्रुतौसाक्षादेवप्रकृतिपुरुषत्वाम्नानात् ॥[२६]॥ ॐआत्मकृ
तेःपरिणामात्ॐ॥ ॥प्रकर्षेणकरोतीतिप्रकृतिरितियोगाच्च। प्रकृतावनुप्रविश्यतांपरिणाम्यतत्परिणामनिया
मकत्वेनतत्रस्थित्वाआत्मनोबहुधाकरणात् । अथहैषआत्माप्रकृतिमनुप्रविश्यात्मानंबहुधाचकार । तस्मात्प्र
कृतिस्तस्मात्प्रकृतिरित्याचक्षतइतिभाल्लवेयश्रुतिः । अविकारोपिपरमःप्रकृतिंतुविकारिणीं । अनुप्रविश्यगो ॥१०४॥
विंदःप्रकृतिश्चाभिधीयतइतिनारदीये। नचान्यत्कल्प्यं ।अप्रामाणिकत्वात् ॥[२७]॥ॐयोनिश्चहिगीयतेॐ ॥

अव्यवधानेनोत्पत्तिद्वारत्वंप्रकृतित्वं । तच्चास्यैवहिगीयते यद्भूतयोनिंपरिपश्यंतिधीराइति । व्यवधाने नसूतिस्तुपुंस्त्वंविद्वद्भिरुच्यते । सूतिरव्यवधानेनप्रकृतित्वमितिस्थितिः । उभयात्मकसूतित्वाद्वासुदेवःप रःपुमान् । प्रकृतिःपुरुषश्चेतिशब्दैरेकोभिधीयतइतिब्रह्मांडे ॥ ६ ॥ ॐएतेनसर्वेव्याख्याताव्याख्याताः ॐ ॥ ॥ एतेनसर्वेशून्यादिशब्दाअपिव्याख्याताः । एषह्येवशून्यएषह्येवतुच्छएषह्येवाभावएषह्येवाव्यक्तोऽ दृश्योचिंत्योनिर्गुणश्चेतिमहोपनिषदि । शमूनंकुरुतेविष्णुरदृश्यःसन्परःस्वयं । तस्माच्छून्यइतिप्रोक्तस्तोद नात्तुच्छउच्यते । नैषभावयितुंयोग्यःकेनचित्पुरुषोत्तमः । अतोऽभावंवदंत्येनंनाश्यत्वान्नाशइत्यपि । सर्व स्यतदधीनत्वात्तत्तच्छब्दाभिधेयता । अन्येषांव्यवहारार्थमिष्यतेव्यवहर्तृभिरितिमहाकौर्मे । एतेनतदधीन त्वाद्युक्तयुक्तिसमुदायेन । अवधारणार्थंसर्वस्याप्युक्तस्याध्यायमूलतः । द्विरुक्तिंकुर्वतेप्राज्ञाअध्यायांतेवि निर्णयइतिवाराहसंहितायां ॥ ७ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पा दाचार्यविरचितेप्रथमाध्यायस्यचतुर्थःपादः ॥ १ ॥ ४ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॥ हरिःॐ।उक्तेऽर्थेऽविरोधंदर्शयत्यनेनाध्यायेन।प्रथमपादेयुक्त्यविरोधं।प्रथमतःस्मृत्यविरोधंदर्शयति ॥ ॥ ॐस्मृत्यनवकाशदोषप्रसंगइतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्ॐ ॥ ॥ सर्वज्ञाहिरुद्रादयः।अतस्तेषांवचनविरोधेऽप्रामाण्यमेवस्यादितिचेन्न।अन्यस्मृतीनांविष्ण्वादिभिर्नितरांसर्वज्ञैरेवक्तृत्वाच्छ्रुतेराधिक्यंचसिध्यति ॥[1]॥ ॐइतरेषांचानुपलब्धेःॐ ॥ ॥ इतरेषांतासुस्मृतिषूक्तानांफलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यंतासांयुक्तं।चशब्देनभागोपलब्धिरंगीकृता ॥[2]॥ ॐएतेनयोगःप्रत्युक्तःॐ ॥ योगफलंप्रत्यक्षतउपलभ्यतइतिनमंतव्यं।उक्ताभ्यासेतत्कालएवफलादृष्टेः ॥[3]॥ ॐनविलक्षणत्वादस्यतथात्वंचशब्दात्ॐ ॥ ॥ नैवंश्रुतेस्तदनुसारिस्मृतेश्चतदुक्तानुपलब्धेरप्रामाण्यं।विलक्षणत्वात्।नित्यत्वात्तदनुसारित्वाच्च।नहिनित्येदोषाःकल्प्याः।स्वतश्चप्रामाण्यं।अन्यथाऽनवस्थितेः।नचक्षुर्नश्रोत्रंनतर्कोनस्मृतिर्वेदाह्येवैनंवेदयंतीतिभाल्लवेयश्रुतेश्च ।नित्यत्वंचशब्दादेवप्रतीयते।वाचाविरूपनित्ययेत्यादेः।अनादिनिधनानित्येतिचस्मृतिः ॥[4]॥ ॐदृश्यतेतुॐ ॥ ॥ अधिकारिणांफलं।भविष्यत्पुराणेच। ऋग्यजुःसामाथर्वाश्चमूलरामायणंतथा। भारतंपंचरात्रंचवेदाइत्येवशब्दिताः।पुराणानिचयानीहवैष्णवानिविदोविदुः।स्व

तःप्रामाण्यमेतेषांनात्रकिंचिद्विचार्यते । यद्येषूक्तंनदृश्येतपूर्वकर्मात्रकारणं । नाप्रामाण्यंभवेदेषांदृश्यतेह्यधि
कारतः । इतःप्रामाण्यमन्येषांनस्वतस्तुकथंचन । अदृश्योक्तौततस्तेषामप्रामाण्यंनसंशयइति ॥ २ ॥ मृदब्र
वीदापोब्रुवन्नित्यादिवचनाद्युक्तिविरुद्धोवेदइत्यतोब्रवीत् ॥ ॥ ॐअभिमानिव्यपदेशस्तुविशेषानुगतिभ्यां
ॐ ॥ ॥ मृदाद्यभिमानिदेवतातत्रव्यपदिश्यते । तासांचेतरेभ्योविशिष्टंसामर्थ्यमनुगतिश्चसर्वत्र । अतस्ता
सांसर्वमुक्तंयुज्यते ॥ ६ ॥ ॐदृश्यतेचॐ ॥ ॥ तासांसामर्थ्यंमहद्भिः । भविष्यत्पुराणेच पृथिव्याद्यभिमा
निन्योदेवताःप्रथितौजसः । अचिंत्याःशक्तयस्तासांदृश्यंतेमुनिभिश्चताः । ताश्चसर्वगतानित्यंवासुदेवैक
संश्रयाइति ॥३॥ असदेवेदमग्रआसीत् असतःसदजायतेत्यादिनाऽसतःकारणत्वोक्तेर्विरोधइत्यतोवक्ति॥
॥ ॐअसदितिचेन्नप्रतिषेधमात्रत्वात्ॐ ॥ ॥ प्रतिषेधमात्रत्वान्नासतःकारणत्वंयुक्तं । असतःकारणत्वा
द्युक्तिविरुद्धंवेदवाक्यमित्येतदत्रनिषिध्यते । सर्वशब्दानांब्रह्मणिसमन्वयेपितदधीनत्वादर्थवदित्यादिनाअ
मुख्यत्वेनान्यस्यापिवाच्यत्वेनांगीकारादसतःप्राप्तिः । तथाचश्रुतिप्राप्तमेवासन्मतमत्रनिषिध्यते । समय
स्योपरिनिषेधात । अर्थाद्युक्तिविरोधोपिनिराक्रियते ॥ ८ ॥ ॐअपीतौतद्वत्प्रसंगादसमंजसंॐ ॥ ॥

असतउत्पत्तौप्रलयेसर्वासत्त्वमेवस्यात् ॥ ९ ॥ ॐ१०नतुदृष्टांतभावात्ॐ ॥ ॥ प्रलयेसर्वासत्त्वं भावेदृष्टांतभावादे वनयुज्यते । सतउत्पत्तिःसशेषविनाशश्चहिलोकेदृष्टः ॥ १० ॥ ॐ११स्वपक्षदोषाच्चॐ ॥ ॥ दृष्टांताभावादेव ॥ ११ ॥ ॐ१२तर्काप्रतिष्ठानादप्यन्यथानुमेयमितिचेदेवमप्यनिर्मोक्षप्रसंगःॐ ॥ ॥ एतावानेवतर्कइतिप्रतिष्ठापकप्रमा णाभावादुक्तादन्यथाप्यनुमेयमितिचेन्न । एवंसतिप्रमाणसिद्धेऽपिमोक्षेअन्यथानुमेयत्वादनिर्मोक्षप्रसंगः । अतोयावत्प्रमाणसिद्धंतावदेवांगीकर्तव्यं । नातोन्यच्छंक्यं । यावदेवप्रमाणेनसिद्धंतावदहापयन् । स्वीकु र्यान्नैवचान्यत्रशंक्यंमानमृतेक्वचिदितिवामने ॥ १२ ॥ ॐ१३एतेनशिष्टाअपरिग्रहाअपिव्याख्याताःॐ ॥ ॥ ए तेनदृष्टांतभावेनाभावेनचावशिष्टाअप्यपरिग्रहाविरुद्धसिद्धांताअकर्तृकत्वाचेतनकर्तृकत्वादयोपि । अक स्माद्धीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति । प्रधानादिदमुत्पन्नंप्रधानमधितिष्ठति । प्रधानेलय मभ्येतिनह्यन्यत्कारणंमतं । जीवाद्भवंतिभूतानिजीवेतिष्ठंत्यचंचलाः । जीवेतुलयमृच्छंतिनजीवात्कारणंपर मित्यादिश्रुतिप्राप्तानिराकृताः । यथादुःखादिषुजीवस्यास्वातंत्र्यमेवमन्येष्वपीतिदृष्टांतः । श्रुतिगतिस्तुब्रह्म वाचकत्वेनप्रदर्शिता । यत्रान्यवाचकत्वेप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते । यत्रविरोधस्तत्रब्रह्मैवोच्यतइ

तिनियमः ॥ [१३/४] ॥ ॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ ॥ कर्माणिविज्ञानमयश्चआत्मापरेऽव्यये सर्वएकीभवंतीतिमुक्तजीवस्यपरापत्तिरुच्यते। अतस्तयोरविभागः। अतःपूर्वमपिसएव। नह्यन्यस्यान्यत्वं युज्यतइतिचेन्न। स्याल्लोकवत् यथालोकेउदकेउदकांतरस्यैकीभावव्यवहारेप्यंतर्भेदोस्त्येव एवंस्यादत्रापि। तथाचश्रुतिः यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवतीति। स्कांदेच उदकंतूदकेसिक्तंमिश्रमेवयथा भवेत्। नचैतदेवभवतियतोवृद्धिःप्रदृश्यते। एवमेवहिजीवोपितादात्म्यंपरमात्मना। प्राप्तोपिनासौभवति स्वातंत्र्यादिविशेषणादिति। ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते। तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरइतिच। नतेमहित्वमन्वश्नुवंति। नतेविष्णोजायमानोनजातइत्यादिच। फलत्वेपियुक्तिविरोधेंतर्भावादत्रोक्तं ॥ [१४/५] ॥ ॥ ॐ तदनन्यत्वमारंभणशब्दादिभ्यःॐ ॥ ॥ स्वतंत्रबहुसाधनासृष्टिर्लोकेदृष्टा। नैवंब्रह्मणः। स्वरूपसामर्थ्यादेवतस्यसृष्टिः। किंस्विदासीदधिष्ठानमारंभणंकतमत्स्वित्कथासीदितिह्याक्षेपः। अधिष्ठानाद्यनुक्तेः। आदिशब्दाद्युक्तिभिश्च। परतंत्रोह्यपेक्षेतस्वतंत्रःकिमपेक्षते। साधनानांसाधनत्वंयतःकिंतस्यसाधनैरित्यादिभिः ॥ [१५] ॥ ॐ भावेचोपलब्धेःॐ ॥ ॥ स्वतंत्रसाधनभावेप्रमाणैरुपलभ्येत। अनुक्तंपंचभिर्वेदैर्नवस्त्व

स्तिकुतश्चन।अतोवेदत्वमेतेषांयतस्तेसर्ववेदकाइतिस्कांदे॥[१६]॥ अद्भ्यःसंभूतःपृथिव्यैरसाच्चेत्यादिनासाधनां
तरप्रतीतेःकथमनुपलब्धिरित्यतआह ॥ ॥ ॐ[१७]सत्त्वाच्चावरस्यॐ॥ ॥ अवरस्यतदधीनस्यसाधनस्यसत्त्वा
त्। कालआसीत्पुरुषआसीत्परमआसीत्तद्यदासीत्तदधीनमासीत्तदावृतमासीदथह्येकएवपरमआसीद्यस्यैत
दासीन्नह्येतदासीदितिकाषायणश्रुतिः॥[१७]॥ॐ[१८]असद्व्यपदेशान्नेतिचेन्नधर्मांतरेणवाक्यशेषात्ॐ ॥ ॥ नास
दासीन्नोसदासीदितिसर्वस्यासत्त्वव्यपदेशान्नेतिचेन्न । अव्यक्तत्वपारतंत्र्यादिधर्मांतरेणहितदुच्यते। तमआ
सीदितिवाक्यशेषात् । नचान्यत्रप्रमाणमस्ति । अजोह्येकोजुषमाणोनुशेतेजहात्येनांभुक्तभोगामजोन्यः ।
अनाद्यनंतंजगदेतदीदृक्प्रवर्ततेनात्रविचार्यमस्ति । नचान्यथाक्वापिचकस्यचेदमभूत्पुरानापितथाभविष्य
त्। असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरं। असत्यमाहुर्जगदेतदज्ञाःशक्तिंहरेर्येनविदुःपरांहि । यःसत्यरूपंजग
देतदीदृक्सृष्ट्वात्वभूत्सत्यकर्मामहात्मा । अथैनमाहुःसत्यकर्मेतिसत्यंह्येवेदंविश्वमसौसृजते । अथैनमाहुर्नि
त्यकर्मेतिनित्यंह्येवासौकुरुते । यच्चिकेतसत्यमित्तन्नमोघमित्यादिश्रुतिस्मृतिभ्यः । परस्परविरोधेतुवाक्या
नांयत्रयुक्तता। तथैवार्थःपरिज्ञेयोनावाक्यायुक्तिरिष्यतइतिबृहत्संहितायां । विरुद्धवत्प्रतीयंत आगमायत्र

वैमिथः। तत्रदृष्टानुसारेणतेषामर्थोन्ववेक्ष्यतइतिच। ईशोऽनीशोजगन्मिथ्यानपूज्योगुरुरित्यपि। इत्यादि
वद्विरुद्धानिवचनान्यथयुक्तयः। प्रमाणैर्बहुभिर्ज्ञेयाआभासाइतिवैदिकैः। वेदवेदानुसारेषुविरोधेऽन्यार्थकल्प
ना। अन्येषांतुविरुद्धानांविप्रलंभोथवाभ्रमइतिभागवततंत्रे। शास्त्रार्थयुक्तोनुभवःप्रमाणंतूत्तमंमतं। मध्यमं
त्वागमोज्ञेयःप्रत्यक्षमधमंस्मृतं। प्रत्यक्षयोरागमयोर्विरोधेनिश्चयायतु। अनुमाद्यानस्वतंत्राःप्रमाणपदवींय
युरितिपुरुषोत्तमतंत्रे॥[१८]॥ ॐ[१९]युक्तेःशब्दांतराच्चॐ॥॥ साधनानांसाधनत्वंयदात्माधीनमिष्यते। तदासा
धनसंपत्तिरैश्वर्यद्योतिकाभवेदित्यादेःसाधनांतरेणसृष्टिर्युक्ता। अद्भ्यःसंभूतोहिरण्यगर्भइत्यष्टावित्यादिश
ब्दांतराच्च॥[१९]॥ ॐ[२०]पटवच्चॐ॥॥ साधनांतरेणहिपटादिसृष्टिर्लोकेदृष्टा॥[२०]॥ ॐ[२१]यथाप्राणादिःॐ॥॥ तच्च
साधनजातंतेनानुप्रविष्टमेव। यथाशरीरेंद्रियादिः। प्रकृतिंपुरुषंचैवप्रविश्यपुरुषोत्तमः। क्षोभयामासभगवान्
सृष्ट्यर्थंजगतोविभुरितिकौर्मे॥[२१]६॥ जीवकर्तृत्वपक्षःश्रुतिप्राप्तोविस्तरान्निराक्रियते॥॥ ॐ[२२]इतरव्यपदेशाद्धि
ताकरणादिदोषप्रसक्तिःॐ॥॥ जीवकर्तृत्वपक्षेहिताकरणमहितकरणंचनस्यात्॥[२२]॥ ॐ[२३]अधिकंतुभेद
निर्देशात्ॐ॥॥ नचब्रह्मणःश्रमचिंतादिदोषप्राप्तिः। अधिकशक्तित्वात्। श्रोतामंताद्रष्टाऽऽदेष्टाघोष्टाविज्ञा

ब्रह्मसू० तासर्वेषांभूतानामंतरपुरुषः। एषतआत्मासर्वांतरः। योशनायापिपासेशोकंमोहंजरांमृत्युमत्येतीत्यादिविशे भाष्यं·
॥ २६ ॥ षनिर्देशात्॥ [२३] ॥ ॐ[२४]अश्मादिवच्चतदनुपपत्तिःॐ॥ ॥ चेतनत्वेप्यश्मादिवदस्वतंत्रत्वात्स्वतःकर्तृत्वानुपपत्ति द्वि· प्र·
जीवस्य। यथादारुमयींयोषांनरःस्थिरसमाहितः। इंगयत्यंगमंगानितथाराजन्निमाःप्रजाइतिभारते ॥ [२४]॥ ७।२७
ॐ[२५]उपसंहारदर्शनान्नेतिचेत्क्षीरवद्धिॐ॥ ॥ जीवेनकार्योपसंहारदर्शनात्तस्यकर्तृत्वमितिचेन्न। यथागोषुक्षी
रंदृश्यमानमपिप्राणादेवजायते। अन्नंरसादिरूपेणप्राणःपरिणयत्यसावितिवचनात्। एवंजीवेदृश्यमानोपि
कार्योपसंहारोस्वातंत्र्यात्परकृतएव। यआत्मानमंतरोयमयति नाहंकर्तानकर्तात्वंकर्तायस्तुसदाप्रभुरित्या
देः॥ [२५] ॥ ॐ[२६]देवादिवदपिलोकेॐ॥॥ नचकर्तुरीश्वरस्यादृष्टिविरोधः। देवादिवददृश्यत्वशक्तियोगात्। लोके
पिशाचादीनांतादृशीशक्तिर्दृष्टाकिम्वीश्वरस्य। नयुक्तियोगाद्वाक्यानिनिराकार्याण्यपिकचित्। विरोधएव
वाक्यानांयुक्तयोनतुयुक्तयइतिबृहत्संहितायां॥ [२६] ॥ ॐ[२७]कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवाॐ॥ ॥अयंच
दोषोजीवकर्तृत्वपक्षे। एकेनांगुलिमात्रेणप्रवर्तमानोपिपूर्णप्रवृत्तिःस्यात्। नचतद्युज्यते। सामर्थ्यैकदेशदर्शना ॥१०८॥
त्। नचैकदेशेन। निरवयवत्वात् । अथयःसजीवःसनित्योनिरवयवोज्ञाताज्ञातासुखीदुःखीशरीरेंद्रियस्थ

इतिभाल्लवेयश्रुतिः। नचोपाधिकृतोंशःसएव। अंशउपहितइतिद्वित्वापेक्षत्वात्। नचान्यत्कल्प्यं। यद्धियुक्त्या
विरुध्येततदीशकृतमेवहीतिगत्यंतरोक्तेः॥[२७]॥॥ ॐ[२८]श्रुतेस्तुशब्दमूलत्वात्ॐ ॥ ॥ नचेश्वरपक्षेऽयंविरोधः ।
योसौविरुद्धोऽविरुद्धोमनुरमनुरवाग्वागिंद्रोनिंद्रःप्रवृत्तिरप्रवृत्तिःसपरःपरमात्मेतिपैंग्यादिश्रुतेरेव । शब्दमूल
त्वाच्चनयुक्तिविरोधः । यद्वाक्योक्तंनतद्युक्तिर्विरोद्धुंशक्नुयात्कचित् । विरोधेवाक्ययोःक्वापिकिंचित्साहा
य्यकारणमितिपुरुषोत्तमतंत्रे ॥[२८]॥ ॐ[२९]आत्मनिचैवंविचित्राश्चहिॐ ॥ ॥परमात्मनोविचित्राश्चशक्तयःसं
तिनान्येषां । विचित्रशक्तिःपुरुषःपुराणोनचान्येषांशक्तयस्तादृशाःस्युः। एकोवशीसर्वभूतांतरात्मासर्वान्दे
वानेकएवानुविष्टइतिश्वेताश्वतरश्रुतिः॥[२९]॥ ॐ[३०]स्वपक्षदोषाच्चॐ ॥॥ येदोषाइतरत्रापितेगुणाःपरमेमताः।
नदोषःपरमेकश्चिद्गुणाएवनिरंतराइतिवचनाज्जीवपक्षएवदोषोनपरपक्षे । अथयःसदोषःसांजनःसजनिःस
जीवोऽथयःसनिर्दोषोनिष्कलःसगुणःपरःपरमात्मेतिकाषायणश्रुतिः ॥[३०]॥ ॐ[३१]सर्वोपेताचतद्दर्शनात्ॐ ॥
सर्वैर्युक्ताशक्तिभिर्देवतासापरेतियांप्राहुरजस्रशक्तिं । नित्यानंदानित्यरूपाऽजराचयाशाश्वतात्मेतिचयांव
दंतीतिचतुर्वेदशिखायां । अतोनकेवलंविचित्रशक्तिः । किंतुसर्वशक्तिरेव ॥[३१]॥ ॐ[३२]विकरणत्वान्नेतिचेत्त

दुक्तंॐ ॥ ॥ नचकरणाभावादनुपपत्तिरितियुक्तं । अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःसश्रृणोत्यकर्णः । सवेत्तिवेद्यंनचतस्यास्तिवेत्तातमाहुरग्र्यंपुरुषंमहांतं । नतस्यकार्यंकरणंचविद्यतेनतत्समश्चाभ्यधिकश्चदृश्यते। परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेत्यादिश्रुतिभ्यः । सर्वोपेताचेतिसामान्यपरिहारेपि विशेषयुक्त्यर्थंपुनराशंका ॥[३२] ८ ॥ यत्प्रयोजनार्थंसृष्ट्यादिस्तदूनत्वादपूर्णतेत्यतआह ॥ ॥ ॐ[३३]नप्रयोजनवत्त्वा त्ॐ ॥ ॥ अथैषएवपरमानंदइत्यादिनाकृतकृत्यत्वान्नप्रयोजनायसृष्टिः॥[३३] ॥किंतु ॥ ॥ ॐ[३४]लोकवत्तुलीलाकै वल्यंॐ ॥ ॥ यथालोकेमत्तस्यसुखोद्रेकादेवनृत्तगानादिलीला । नतुप्रयोजनापेक्षया एवमेवेश्वरस्य । ना रायणसंहितायांच सृष्ट्यादिकंहरिर्नैवप्रयोजनमपेक्ष्यतु । कुरुतेकेवलानंदाद्यथामत्तस्यनर्तनं । पूर्णानंदस्य तस्येहप्रयोजनमतिःकुतः । मुक्ताअप्याप्तकामाःस्युःकिमुतस्याखिलात्मनइति । देवस्यैषस्वभावोयमाप्तका मस्यकास्पृहेतिचश्रुतिः ॥ [३४] ९ ॥ सर्वकर्तृत्वेवैषम्यनैर्घृण्येतस्येत्यतोवक्ति ॥ ॥ ॐ[३५]वैषम्यनैर्घृण्येनसापेक्षत्वात्त थाहिदर्शयतिॐ ॥ ॥ कर्मापेक्षयाफलदातृत्वान्नतस्यवैषम्यनैर्घृण्ये । पुण्येनपुण्यंलोकंनयतिपापेनपापमि तिहिश्रुतिः ॥[३५] ॥ ॐ[३६]नकर्माविभागादितिचेन्नानादित्वात्ॐ ॥ ॥ यदपेक्षयासौफलंददातिनतत्कर्म । एष

ह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषतएषउएवासाधुकर्मकारयतितंयमधोनिनीषतइतिश्रुतेःक र्मणोपितन्निमित्तत्वादितिचेन्न। तस्यापिपूर्वकर्मकारणमित्यनादित्वात्कर्मणः। भविष्यत्पुराणेच पुण्यपा पादिकंविष्णुःकारयेत्पूर्वकर्मणा। अनादित्वात्कर्मणश्चनविरोधःकथंचनेति ॥ ३६ ॥ ॐउपपद्यतेचाप्युपल भ्यतेचॐ ॥ ॥ नचकर्मापेक्षत्वेनेश्वरस्यास्वातंत्र्यं। द्रव्यंकर्मचकालश्चस्वभावोजीवएवच। यदनुग्रहतःसं तिनसंतियदुपेक्षयेत्यादिनाकर्मादीनांसत्त्वस्यापितदधीनत्वात्। नचपुनर्वैषम्याद्यापातेनदोषः। तादृशवै षम्यादेरुपलभ्यमानत्वात्। सकारयेत्पुण्यमथापिपापंनतावतादोषवानीशितापि। ईशोयतोगुणदोषादि सत्त्वेस्वयंपरोनादिरादिःप्रजानामितिचतुर्वेदशिखायां ॥ ३७ १० ॥ अवशिष्टैरुपसंहरति ॥ ॥ ॐ ३८ सर्वधर्मोपपत्ते श्चॐ ॥ ॥ गुणाःश्रुताःसुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशंका। चिंत्याअचिंत्याश्चतथैवदोषाःश्रुताश्च नाज्ञैर्हितथाप्रतीताइतिसर्वगुणोपपत्तिश्रुतेश्च ॥ ३८ ११ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानं दतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यप्रथमःपादः ॥ २ ॥ १ ॥ ॥ ॥ ॥

ॐ ॥ इतरेषांचानुपलब्धेरितिसामान्यतोनिराकरणंसमयानांकृतं। विशेषतोनिराकरोत्यस्मिन्पादे। अचेत

नप्रवृत्तिमतंप्रथमतोनिराकरोति ॥।॥ ॐ[१]रचनानुपपत्तेश्चनानुमानंॐ ॥ ॥ अचेतनस्यस्वतःप्रवृत्त्यनुपपत्तेर्ना
नुमानपरिकल्पितंप्रधानंजगत्कर्तृ । चशब्देनप्रमाणाभावंदर्शयति ॥[१]॥ ॐ[२]प्रवृत्तेश्चॐ ॥ ॥ चेतनस्यस्वतःप्रवृ
त्तिदर्शनाच्च ॥[२]॥ ॐ[३]पयोंबुवच्चेत्तत्रापिॐ ॥ ॥ पयोंबुवदचेतनस्यापिप्रवृत्तिर्युज्यतइतिनयुक्तं । एतस्यवाअ
क्षरस्यप्रशासनेगार्गिप्राच्योन्यानद्यःस्यंदंतेयाश्चश्वेतेभ्यःपर्वतेभ्यःप्रतीच्योन्यायांयांचदिशमनु । एतेनहवा
वपयोमंडंभवतीत्यादितत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ॥[३]॥ ॐ[४]व्यतिरेकानवस्थितेश्चानपेक्षत्वात्ॐ ॥ ॥न
ऋतेत्वत्क्रियतेकिंचनारइतितद्व्यतिरेकेणकस्यापिकर्मणोनवस्थितेरनपेक्षितमेवाचतनेवादिमतं ॥[४]॥ सेश्व
रसांख्यमतंनिराकरोति ॥ यथापृथिव्याएवपर्जन्यानुगृहीतंतृणादिकमुत्पद्यतेएवंप्रधानादीश्वरानुगृहीतंज
गदित्यतोब्रवीति ॥ ॥ ॐअन्यत्राभावाच्चनतृणादिवत्ॐ ॥ ॥ यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा ।
अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः । ब्रह्मण्येवेदमाविरासीद्ब्रह्मणिस्थितंब्रह्मणिलयमभ्युपैति । ब्रह्मैवा
धस्ताद्ब्रह्मैवोपरिष्टाद्ब्रह्ममध्यतोब्रह्मसर्वतोब्रह्मैवेदंसर्वमित्यादिश्रुतिभ्योन्यत्रजगतोऽभावात्तृणादीनांपर्जन्यव
न्नानुग्राहकत्वमात्रमीश्वरस्य । सएवभूयोनिजवीर्यचोदितांस्वजीवमायांप्रकृतिंसिसृक्षतीं । अनामरूपात्म

निरूपनामनीविधित्समानोनुससारशास्तिकृदितिभागवते । द्रव्यंकर्मचकालश्चेत्यादिच । चशब्देनप्रकृति सत्तादिप्रदत्वंचांगीकृतं ॥२॥ लोकायतिकपक्षंनिराकरोति ॥ ॥ ॐअभ्युपगमेप्यर्थाभावात्ॐ ॥ ॥ य स्यधर्माधर्मौनस्तःतत्सिद्धांतेकिंप्रयोजनं । अतःस्वव्याहतेरेवोपेक्ष्यः ॥३॥ पुरुषोपसर्जनप्रकृतिकर्तृत्ववाद मपाकरोति ॥ ॥ ॐपुरुषाश्मवदितिचेत्तथापिॐ ॥ ॥ यथाचेतनसंबंधादचेतनमेवशरीरमश्मादिकमादा यगच्छति । एवमचेतनापिप्रकृतिःपुरुषसंबंधात्प्रवर्ततइतिचेन्न । नऋतेत्वक्रियतइतितत्रापितथात्वेदृष्टांता भावात् ॥७॥ ॐअंगित्वानुपपत्तेःॐ ॥ ॥ शरीरप्रवृत्तौपुरुषस्यांगित्वात् । अंगमंगीसमादाययथाकार्यंक रोत्यसावित्यंगित्वव्यवहारोनुपपन्नः ॥४॥ प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति ॥ ॥ ॐअन्यथानुमि तौचज्ञशक्तिवियोगात्ॐ ॥ ॥ शरीरसंबंधात्पुरुषःप्रवर्ततइत्यंगीकारेपिस्वतस्तस्यासामर्थ्याच्छरीरसंबंधए वायुक्तः ॥९॥ ॐविप्रतिषेधाच्चासमंजसंॐ ॥ ॥ सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमंजसं। श्रुतयःस्मृतयश्चैवयुक्तयश्चेश्वरंपरं । वदंतितद्विरुद्धंयोवदेत्तस्मान्नचाधमइतिपाद्मे ॥१०॥ परमाण्वारंभवाद मपाकरोति ॥ ॥ ॐमहद्दीर्घवद्वाह्रस्वपरिमंडलाभ्यांॐ ॥ ॥ महत्त्वाद्दीर्घत्वाच्चयथाकार्यमुत्पद्यते।एवंह्रस्व

त्वात्पारिमांडिल्याच्चोत्पद्येत । वाशब्दादन्यथैतयोरपिनस्यात् । विशेषकारणाभावात् ॥ [११] ॥ ॐ[१२]उभयथापि नकर्मातस्तदभावःॐ ॥ ॥ ईश्वरेच्छायानित्यत्वेतद्भावेपिपरमाणुकर्माभावान्नेदानीमपितत्स्यात्। अनित्यत्वे तत्कारणाभावात् । अतःपरमाणुचेष्टाभावात्तत्कार्याभावः । वैदिकेश्वरस्यतुवेदेनैवसर्वशक्तित्वोक्तेःसर्वमुपप द्यते । स्वतएवकालेविशेषांगीकृतेश्च ॥ [१२] ॥ ॐ[१३]समवायाभ्युपगमाच्चसाम्यादनवस्थितेःॐ ॥ ॥ कार्यकारणा दीनांसमवायसंबंधांगीकारात्तस्यचभिन्नत्वसाम्यात्समवायांतरापेक्षायामनवस्थितिः । नचतत्प्रमाणं । प्रथ मसंबंधासिद्ध्यैवतदसिद्धिः । स्वनिर्वाहकत्वेसमवायएवनस्यात् ॥ [१३] ॥ ॐ[१४]नित्यमेवचभावात्ॐ ॥ ॥ नित्यत्वा च्चपरमाणूनांसमवायस्यचतस्यैवजनित्वांगीकारान्नित्यमेवकार्यंस्यात् । अन्यथानकदाचित् ॥ [१४] ॥ ॐ[१५]रूपा दिमत्त्वाच्चविपर्ययोदर्शनात्ॐ ॥ ॥ रूपादिमत्त्वाच्चपरमाणूनामनित्यत्वंतथादृष्टत्वाल्लोके ॥ [१५] ॥ ॐ[१६]उभयथा चदोषात्ॐ ॥ ॥ नित्यत्वेपरमाणूनांतद्वत्सर्वस्यनित्यत्वंस्यात् । विशेषप्रमाणाभावात् । अनित्यत्वेकारणाभा वात्तदुत्पत्त्यभावः ॥ [१६] ॥ ॐ[१७]अपरिग्रहाच्चात्यंतमनपेक्षा ॐ ॥ ॥ श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपे क्षता । आन्वीक्षकींतर्कविद्यामनुरक्तोनिरर्थकामितिमोक्षधर्मे ॥ [१७] ॥ परमाणुपुंजवादिमतंनिराकरोति ॥

।।ॐ[१८]समुदायउभयहेतुकेपितदप्राप्तिःॐ।। ।। समुदायस्यैकहेतुकत्वंनयुज्यते।उभयहेतुकेप्यन्योन्याश्रयत्वात्त दप्राप्तिः।अन्यथासर्वदासमुदायसत्त्वंस्यात् ।।[१८]।। ॐ[१९]इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वात्ॐ।। सर्वदाविद्यमानोपिसमुदायःपरस्परापेक्षयाव्यवह्रियतइतिचेन्न । एकंकार्यमुत्पाद्यतस्यविनष्टत्वात्परस्परप्रत्ययस्तदपेक्षयाव्यवहारइतिनयुज्यते । कारणेसतिकार्यंभवत्येवेतिहितस्यनियमः ।।[१९]।। ॐ[२०]उत्तरोत्पादेचपूर्वनिरोधात्ॐ ।। ।। कार्योत्पत्तावेवकारणस्यविनाशाच्चनविशेषकार्योत्पत्तिः ।।[२०]।। ॐ[२१]असतिप्रतिज्ञोपरोधोयौगपद्यमन्यथाॐ ।।।। कारणेविनष्टेकार्यमुत्पद्यतेचेत्तत्कार्यमितिप्रतिज्ञाहानिः । तत्कालेकारणमस्तिचेद्विनाशकारणाभावाद्यौगपद्यंसर्वकार्याणां ।।[२१]।। ॐ[२२]प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्ॐ ।। ।। कारणेसतिकार्यंभवत्येवेतिनियमात्निस्संतानःससंतानश्चविनाशोनयुज्यते ।।[२२]।। ॐ[२३]उभयथाचदोषात्ॐ ।। ।। कारणेसतिकार्यंभवत्येवेतिनियमेसर्वदाकार्यभावान्नकार्यकारणविशेषः । अनियमेकार्यानुत्पत्तिः ।।[२३]।। ॐ[२४]आकाशेचाविशेषात्ॐ।। ।। दीपादिषुविशेषदर्शनात्क्षणिकत्वेनान्यत्रापिक्षणिकत्वमनुमीयतेचेदाकाशादिष्वविशेषदर्शनादन्यत्रापितदनुमीयेत ।।[२४]।।ॐ[२५]अनुस्मृतेश्चॐ ।। ।। तदेवेदमितिप्रत्यभिज्ञानाच्च । प्रत्यभिज्ञा

याभ्रांतित्वेविशेषदर्शनस्यापिभ्रांतित्वं ॥[२५] ७ ॥ शून्यवादमपाकरोति ॥ ॥ ॐ[२६]नासतोदृष्टत्वात्ॐ ॥ ॥ अदृष्ट
त्वादसतःकारणत्वंनयुज्यते ॥[२६]॥ ॐ[२७]उदासीनानामपिचैवंसिद्धिःॐ ॥ ॥ असतःकारणत्वेउदासीनानांहे
योपादेयबुद्धिवर्जितानांखपुष्पादीनामपिसकाशात्कार्यसिद्धिः । चशब्दान्नचेदन्यत्रापिनस्यादविशेषात्
॥[२७]॥ ॐ[२८]नाभावउपलब्धेःॐ ॥ ॥ नचजगदेवशून्यमितिवाच्यं । दृष्टत्वात् ॥[२८]॥ ॐ[२९]वैधर्म्याच्चनस्वप्नादिवत्
ॐ ॥ नचदृष्टस्यापिस्वप्नादिवदभावः । तस्योत्तरकालेस्वप्नोयंनायंसर्पइत्याद्यनुभवात् । नचात्रतादृशंप्रमाणम
स्ति ॥[२९] ८ ॥ विज्ञानवादमपाकरोति ॥ ॥ ॐ[३०]नभावोनुपलब्धेःॐ ॥ ॥ नविज्ञानमात्रंजगत् । तथानुभवाभावात्
॥[३०]॥ ॐ[३१]क्षणिकत्वाच्चॐ ॥ ॥ ज्ञानंक्षणिकं । अर्थानांचस्थायित्वमुक्तं । अतश्चनैक्यं ॥[३१]॥ ॐ[३२]सर्वथानुपपत्ते
श्चॐ ॥ ॥ प्रमाणाभावात्सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चनैतेपक्षाग्राह्याः ॥[३२] ९ ॥ स्याद्वादिमतंदूषयति ॥ ॥
ॐ[३३]नैकस्मिन्नसंभवात्ॐ ॥ ॥ सत्स्यादसत्स्यात्सदसत्स्यात्ततोन्यच्चस्यादित्येतन्नैकस्मिन्युज्यते । अदृष्टत्वेना
संभवात् ॥[३३]॥ ॐ[३४]एवंचात्माकार्त्स्न्यंॐ ॥ ॥ जीवस्यशरीरपरिमितत्वांगीकारेऽण्वादिशरीरस्थस्यहस्त्या
दिशरीरेऽकार्त्स्न्यंस्यात् ॥[३४]॥ ॐ[३५]नचपर्यायादप्यविरोधोविकारादिभ्यःॐ ॥ ॥ तत्तच्छरीरस्थस्यतत्तत्परिमा

णत्वमितिनमंतव्यं । विकारित्वादनित्यत्वप्रसक्तेः ॥[३५]॥ ॐअंत्यावस्थितेश्चोभयनित्यत्वादविशेषात्ॐ॥ ॥
परिमाणाभावेस्वरूपाभावप्राप्त्यांत्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभयनित्यत्वादविशेषेणसर्वशरीर
नित्यत्वंस्यात् ॥[३६][१०]॥ पाशुपतपक्षमपाकरोति ॥ ॥ ॐपत्युरसामंजस्यात्ॐ ॥ ॥ यंकामयेतंतमुग्रंकृणोमि
तंब्रह्माणंतमृषिंतंसुमेधां । अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाउ । अस्यदेवस्यमीळ्हुषोवयाविष्णो
रेषस्यप्रभृथेहविर्भिः । विदेहिरुद्रोरुद्रियंमहित्वंयासिष्टंवर्तिरश्विनाविरावत् । एकोनारायणआसीन्नब्रह्माने
शानोनाग्नीषोमावित्यादिश्रुतेःपारतंत्र्येणासमंजसत्वान्नपशुपतिरीश्वरोजगत्कर्ता ॥[३७]॥ ॐसंबंधानुपपत्ते
श्चॐ ॥ ॥ अशरीरत्वात्तस्यजगतासंबंधोनयुज्यतेकर्तृत्वेन । मृतपुरुषवत् ॥[३८]॥ ॐअधिष्ठानानुपपत्तेश्च
ॐ ॥ ॥ पृथिव्याद्यधिष्ठानेस्थितोहिकुलालादिःकार्यंकरोति । नचास्यतदस्ति ॥[३९]॥ ॐकरणवच्चेन्नभोगा
दिभ्यःॐ ॥ ॥ इदमेवजगत्तस्यकरणवदधिष्ठानादिरूपं । नित्यस्यापिकस्यचिद्भावाद्युज्यतइतिचेन्न । भो
गादिप्राप्तेः। उत्पत्तिविनाशौसुखदुःखभोगाश्चप्राप्स्यंतेतद्वताः॥[४०]॥ ॐअंतवत्त्वमसर्वज्ञतावाॐ॥ ॥ देहवत्त्वे
तवत्त्वमन्यथाज्ञानाभावः । शरीरिणएवहिज्ञानोत्पत्तिर्दृष्टा । विष्णोस्तुश्रुत्यैवसर्वेविरोधाःपरिहृताः । यदा

त्मकोभगवांस्तदात्मिकाव्यक्तिः । किमात्मकोभगवान्ज्ञानात्मकऐश्वर्यात्मकःशक्त्यात्मकइति । बुद्धिमनों
गप्रत्यंगवत्तांभगवतोलक्षयामहे । बुद्धिमान्मनोवानंगवान्प्रत्यंगवानिति । सदेहःसुखगंधश्चज्ञानभाःसत्प
राक्रमः । ज्ञानज्ञानःसुखसुखःसविष्णुःपरमोक्षरइत्यादिकया ॥[४१][११]॥ शक्तिपक्षंदूषयति ॥ ॥ ॐ[४२]उत्पत्त्यसं
भवात्ॐ ॥ नहिपुरुषाननुगृहीतस्त्रीभ्यउत्पत्तिर्दृश्यते ॥[४२]॥ ॐ[४३]नचकर्तुःकरणंॐ ॥ ॥ यदिपुरुषोंगीक्रि
यतेतस्यापिकरणाभावादनुपपत्तिः ॥[४३]॥ ॐ[४४]विज्ञानादिभावेवातदप्रतिषेधःॐ ॥ ॥ यदिविज्ञानादिकरणं
तस्यांगीक्रियतेतदाततएवसृष्ट्याद्युपपत्तेरीश्वरवादांतर्भावः ॥[४४]॥ ॐ[४५]विप्रतिषेधाच्चॐ ॥ ॥ सकलश्रुत्यादि
विरुद्धत्वाच्चासमंजसं ॥[४५][१२]॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्य
विरचितेद्वितीयाध्यायस्यद्वितीयःपादः ॥ २ ॥ २ ॥ ॥ ॥ ॥
॥ ॐ ॥ जीवपरमात्माधिभूताधिदैवेषुश्रुतीनांपरस्परविरोधमपाकरोत्यनेनपादेन ॥ ॥ ॐ[१]नवियदश्रुतेःॐ ॥
नवियदुत्पत्तिमत् । तथाऽश्रुतेः ॥[१]॥ ॐ[२]अस्तितुॐ ॥ ॥ अस्त्येवचोत्पत्तिश्रुतिः आत्मनआकाशःसंभूतइ
त्यादि ॥[२]॥ ॐ[३]गौण्यसंभवात्ॐ ॥ ॥ अनादिर्वाअयमाकाशःशून्योऽलौकिकइत्यादिश्रुतिर्गौणी । अन्यथो

त्पत्तिश्रुतिबाहुल्यासंभवात् ॥ ३ ॥ ॐशब्दाच्चॐ ॥ ॥ अथहवावनित्यानिपुरुषःप्रकृतिरात्माकालइति । अथया न्यनित्यानिप्राणःश्रद्धाभूतानिभौतिकानीति । यानिहवावउत्पत्तिमंतितान्यनित्यानि । यानिहवाअनुत्पत्ति मंतितानिनित्यानि । नह्येतानिकदाचनोत्पद्यंतेनविलीयंतेपुरुषःप्रकृतिरात्माकालइति । अथैतान्युत्पत्तिमं तिचानुत्पत्तिमंतिचप्राणःश्रद्धाकाशइति भागशोह्युत्पद्यंतइतिभाल्लवेयश्रुतेश्च ॥ ४ ॥ ॐस्याच्चैकस्यब्रह्मशब्दव त्ॐ ॥ ॥ स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वंचगौणमुख्यत्वापेक्षया । यथाब्रह्मशब्दः । अथकस्मादुच्यतेपरं ब्रह्मेति बृंहतिबृंहयतिचेतीतिश्रुतेः । परेब्रह्मणिमुख्योपिगौणत्वेनविरिंचादिष्वपिवर्तते । अतएवाब्रह्मत्वंचते षां । एवमन्यत्राप्यनुत्पत्तिमच्छब्दः ॥ ५ ॥ ॐप्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यःॐ ॥ ॥ ब्रह्मणोन्यस्यानित्यत्वेइद ंसर्वमसृजतेत्यादिप्रतिज्ञाहानिः । आकाशस्यापिसर्वस्माद्व्यतिरेकात् । आत्मावाइदमेकएवाग्रआसीत् । स देवसोम्येदमग्रआसीदेकमेवाद्वितीयं । इदंवाअग्रेनैवकिंचनासीदित्यादिश्रुतिभ्यः ॥ ६ ॥ ॐयावद्विकारंतुवि भागोलोकवत्ॐ ॥ ॥ विभक्तत्वाच्चविकारित्वंयुक्तं । विकारिणएवहिविभक्तालोकेदृश्यंते । एकोऽविभक्तःपर मःपुरुषोविष्णुरुच्यते । प्रकृतिःपुरुषःकालस्त्रयएतेविभागतः । चतुर्थस्तुमहान्प्रोक्तःपंचमोऽहंकृतिर्मता । तद्वि

भागेनजायंतआकाशाद्याःपृथक्पृथक् । योविभागीविकारःससोऽविकारःपरोहरिः। अविभागात्परानंदोनित्योनित्यगुणात्मकः । विभागोह्यल्पशक्तिःस्यान्नतदस्तिजनार्दनइतिबृहत्संहितायां ॥ १ ॥ अथहनित्याश्चानित्याश्चतेजोबन्नान्याकाशइतितान्यनित्यानि वायुर्वावनित्योवायुनाहिसर्वाणिभूतानिनेनीयंते । अथचेतनाश्चाचेतनाश्चतेजोबन्नान्याकाशइतितान्यचेतनानि वायुर्वावचेतनोवायुनाहिसर्वाणिभूतानिविज्ञायंते । कुविदंगनमसायेवृधासःपुरादेवाअनवद्यासआसन् । तेवायवेमनवेबाधितायावासयन्नुषसंसूर्येण । सावाएषादेवताऽनादिर्योयंपवतइति । यस्यनादिर्नमध्यंनांतोनोदयोनानिम्लोचइत्यादिश्रुतिभ्योवायोरनुत्पत्तिरित्यतोब्रवीति॥ ॥ ॐएतेनमातरिश्वाव्याख्यातःॐ ॥ ॥ एतेनमुख्यामुख्यानुत्पत्तिवचनेनविभक्तत्वाच्चवाय्वनुत्पत्तिश्रुतिरपिव्याख्याता । नित्यःपरमनित्यश्चतथाऽनित्यःपरस्तथा । चतुर्धैतज्जगत्सर्वंपराऽनित्यंतुपार्थिवं । अनित्यानितुभूतानिनित्योवायुरुदाहृतः। परस्तुनित्यःपुरुषःप्रकृतिःकालएवच । एतच्चतुष्टयंविष्णुःस्वयंनित्यःपरात्परः । प्रतिव्यूह्यव्यूह्यचासावतीत्यचजनार्दनः । धारयत्यनिशंदेवोनित्यानंदैकलक्षणइतिकौर्मे ॥ २ ॥ ॥ ॐअसंभवस्तुसतोऽनुपपत्तेःॐ ॥ ॥ असद्वाइदमग्रआसीत्ततोवैसदजायत । असतःसदजायतेत्यादिश्रुतिभ्यः

सतोप्युत्पत्तिरितिचेन्न। अनुत्पत्तिरेवसतः। तुशब्देनोक्तव्यवस्थामपाकरोति। नह्यसतःसदुत्पद्यते। अदृष्टत्वादनुपपत्तेः। तद्वाएतद्ब्रह्माहुर्बृंहतिबृंहयतिचेति। तद्वाएतदसदाहुर्नह्यासादयतिकश्चनेति। तद्वाएतत्परमाहुःपरतोहितदुदीक्ष्यतइतिश्रुतेरसच्छब्दोब्रह्मवाची। देवानांपूर्व्येयुगेऽसतःसदजायतेति। ब्रह्मवाअसतसद्वावप्राणःप्राणोवावमहान्सहओजोबलमित्याचक्षतइतिपैंगिश्रुतिः। त्वंदेवशक्त्यांगुणकर्मयोनौरेतस्त्वजायांकविराद्धेजः। ततोवयंसत्प्रमुखायदर्थेबभूविमात्मन्करवामकिंतइतिभागवते। अजायमानोबहुधाविजायतइतिच। प्रत्यक्षत्वंहरेर्जन्मनविकारःकथंचन। पुरुषःप्रकृतिःकालोमहानित्यादिषुक्रमात्। विकारएवजननंपुरुषेतद्विशेषणं। परतंत्रविशेषोहिविकारइतिकीर्तितइतिपाद्मे। अविकारोपिभगवान्सर्वशक्तित्वहेतुतः। विकारहेतुकंसर्वंकुरुतेनिर्विकारवान्। शक्तिशक्तिमतोश्चापिनविभेदःकथंचन। अविभिन्नापिसेच्छादिभेदैरपिविभाव्यतइतिभागवततंत्रे॥ ९/३॥ ॥ ॐतेजोतस्तथाह्याहॐ॥ ॥ वायोरग्निरित्यादेर्नान्यतउत्पत्तिर्ग्राह्या। अतएवपरात्तदपिजायते। तत्तेजोसृजतेतिह्याह। कारणत्वेनेत्युक्तेपिअमुख्यतयान्येषामपिशब्दोक्तत्वात्पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थं॥ १०/४॥ ॥ ॐ११आपःॐ॥ ॥ ब्रह्मैवेदमग्रआसीत्तदपोसृजततदिदंसर्वमितिश्रुते

रग्नेरापइत्युक्तेपिब्रह्मणएवाबादिसृष्टिः।एतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिच। खंवायुर्ज्योतिरापःपृथिवीवि
श्वस्यधारिणीत्यादिच। कर्तासर्वस्यवैविष्णुरेकएवनसंशयः।इतरेषांतुसत्ताद्यायतएवतदाज्ञयेतिभविष्यत्पुरा
णे। वामनेच तत्रतत्रस्थितोविष्णुस्तत्तच्छक्तीःप्रबोधयन्। एकएवमहाशक्तिःकुरुतेसर्वमंजसेति। घर्मात्स्वे
दादिदृष्टेःपुनःप्रतिषेधः॥ [११]५ ॥ ताआपऐक्षंतबह्व्यःस्यामप्रजायेमहीति। ताअन्नमसृजंतेत्यद्भ्योन्नसृष्टिःश्रूय
ते। अद्भ्यःपृथिवीतिकुत्रचित्पृथिवीसृष्टिः। अतोविरुद्धत्वादप्रामाण्यमित्यतोवक्ति॥ ॥ॐ[१२]पृथिव्यधिकार
रूपशब्दांतरादिभ्यःॐ॥ ॥ पृथिवीतत्रान्नशब्देनोच्यते। भूताधिकारत्वात्। कार्ष्ण्यप्रचुराचपृथिवी। नान्न
स्यतथाविशेषः।आपश्चपृथिवीचान्नं।पृथिवीवाअन्नं। ताआपोन्नमसृजंतपृथिवीवाअन्नमित्यादिशब्दांतराच्च।
आदिशब्दाद्युक्तिः। अपौरुषेयत्वेनादोषस्यवाक्यस्यनाप्रामाण्यमित्यादि। कौर्मेच विरोधोवाक्ययोर्यत्रना
प्रामाण्यंतदेष्यते।यथाऽविरुद्धताचस्यात्तथार्थःकल्प्यएतयोरिति। रक्तोग्निरुदकंशुक्लंकृष्णैवपृथिवीस्वतः। ना
भिपद्माभिसंबंधात्पीतासेत्यभिधीयते।क्षत्ररक्ताभिसंबंधाद्रक्तोदकबहुत्वतः।शुक्लत्वमेत्येवमेववर्णांतरगतिर्भवे
त्। विष्णुवीर्याभियोगाच्चपीतत्वंभुवइष्यते। स्वर्णवीर्योहिभगवाननादिःपरमेश्वरइतिव्योमसंहितायां॥ [१२]६॥

प्राणानाग्रंथिरसिरुद्रोमाविशांतकः। तेनान्नेनाप्यायस्वेत्यादिनाऽन्यःसंहर्ताप्रतीयतइत्यतोब्रूते ॥ ॥ ॐ[१३]तंद
भिध्यानादेवतुतल्लिंगात्सःॐ ॥ ॥ तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांतेविश्वमायानिवृत्तिरितिबंध
लयस्यतदभिध्याननिमित्तत्वलिंगात्तत्कर्तृत्वंप्रतीयते । किमुसादेर्जगतः । इत्येतस्मादेवसंहारकर्ताविष्णु
रितिप्रतीयते । किमु यमप्येतिभुवनंसांपरायेसनोहरिर्घृतमिहायुषेत्तुदेवः । यइदंसर्वंविलापयतिसहरिःपरःप
रमात्मेत्यादिश्रुतिभ्यइत्येवशब्दः।स्रष्टापाताचसंहर्तासएकोहरिरीश्वरः। स्रष्टृत्वादिकमन्येषांदारुयोषावदुच्य
ते। एकदेशक्रियाचात्रनतुसर्वात्मनेरितं। सृष्ट्यादिकंसमस्तंतुविष्णोरेवपराद्भवेदितिस्कांदे। निमित्तमात्रमी
शस्यविश्वसर्गनिरोधयोः । हिरण्यगर्भःशर्वश्चकालाख्यारूपिणस्तवेतिभागवते । सब्रह्मणाविसृजतिसरुद्रेण
विलापयतिसोनुत्पत्तिरलयएकएवहरिःपरःपरानंदइतिचमहोपनिषदि ॥ ७[१३] ॥ अतएवहीदंपराक्रमादुत्प
द्यतेक्रमाद्विलीयतेनासावुदेतिनास्तमेतीतिभाल्लवेयश्रुतौक्रमाल्लयःप्रतीयते। अक्षरात्परमादेवसर्वमुत्पद्यते
क्रमात्। व्युत्क्रमाद्विलयश्चैवतस्मिन्नेवपरात्मनीतिचतुर्वेदशिखायांव्युत्क्रमाल्लयःप्रतीयतइत्यतआह॥ ॥ ॐ
वि[१४]पर्ययेणतुक्रमोतउपपद्यतेचॐ ॥ ॥ क्रमवचनमपिविपरीतक्रमापेक्षया । कर्ताप्राणादिकस्यास्यहंताभू

म्यादिकस्यच । यःक्रमाद्युत्क्रमाच्चैवसहरिःपरउच्यतइत्यतएवभाल्लवेयश्रुतिवचनात् । अनुरूपःक्रमःसृष्टौ प्रतिरूपोलयेक्रमः । इतिक्रमेणभगवान्सृष्टिसंहारकृद्धरिरितिपाद्मे । पूर्वेषांपूर्वेषांसामर्थ्याधिक्यादुपपद्यते च । वामनेच पूर्वेपूर्वेयतोविष्णोःसन्निधानंक्रमाधिकं । सामर्थ्याधिक्यमेतेषांपश्चादेवलयस्तथा । व्याप्तिश्चाभ्यधिकातेषामतएवनसंशयइतिच ॥[१४]८॥ ॥ ॐ[१५]अंतराविज्ञानमनसीक्रमेणतल्लिंगादितिचेन्नाविशेषात्ॐ ॥ ॥ प्राणान्मनोमनसश्चविज्ञानं । यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनीतिलिंगाद्विज्ञानमनसीअंतराविपरीतक्रमइतिचेन्न । विशेषप्रमाणाभावात् ॥[१५] ॥ ॐ[१६]चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्तद्भावभावित्वात्ॐ ॥ ॥ मनसश्चविज्ञानमितिव्यपदेशश्चराचरेष्वालोचनाद्विज्ञानंभवतीतिभागापेक्षयास्यात् । नचविज्ञानतत्त्वापेक्षया । स्कांदेच परादव्यक्तमुत्पन्नमव्यक्तात्तुमहांस्तथा । विज्ञानतत्त्वंमहतस्समुत्पन्नंचतुर्मुखात् । विज्ञानतत्त्वात्तुमनोमनस्तत्त्वात्तुखादिकं । एवंबाह्यापरासृष्टिरंतस्तद्व्यक्त्यपेक्षया । विपरीतक्रमोज्ञेयोयस्मादंतेहरेर्दृशिरिति ॥[१६]९॥ ॥ ॐ[१७]नात्माऽश्रुतेर्नित्यत्वाच्चताभ्यःॐ ॥ ॥ सइदंसर्वंविलाप्यांतस्तमसिनिलीनस्तद्विलाप्यव्युत्तिष्ठते । सइदंसर्वंविसृजतिविलापयतिविस्थापयतिप्रस्थापयत्याच्छादयतिप्र

काशयतिविमोचयत्येकएवेतिश्रुतेःपरमात्मापिनलीयते। अश्रुतत्वाद्ब्रह्मलयस्य । निलीनशब्देनापिहितत्व मुच्यते। तुच्छयेनाभ्वपिहितंयदासीदितिश्रुतेः। सएतस्मिन्नंतस्तमसिनिलीनःप्रकृतिंपुरुषंकालंचानुपश्यति नैनंपश्यतिकश्चनेतिपैंगिश्रुतिः। नित्योनित्यानांचेतनश्चेतनानां। सनित्योनिर्गुणःपरमोविभुःपरःपरमात्मा। नित्योविभुःकारणोलोकसाक्षीपरोगुणैःसर्वदृक्शाश्वतश्चेत्यादिश्रुतिभ्योनित्यत्वावगमाच्च ॥१७॥ नित्योनि त्यानामितिजीवस्यापिनित्यत्वमुक्तं। सर्वएतेचिदात्मानोव्युच्चरंतीत्युत्पत्तिरुच्यते। अतोविरोधइत्यतआ ह ॥ ॥ ॐज्ञोऽतएवॐ॥ ॥ जीवोप्यतएवपरमेश्वरादुत्पद्यते। शब्दादेव। तेवाएतेचिदात्मानोऽविनष्टाः परंज्योतिर्निविशंत्यविनष्टाएवोत्पद्यंतेनविनश्यंतिकदाचनेतिकाषायणश्रुतिः ॥१८॥ ॐयुक्तेश्चॐ ॥ ॥ नि त्यस्यापिजीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते। उत्पद्यंतेचिदात्मानोनित्यानित्यात्परात्मनः। उपाध्यपेक्षयाते षामुत्पत्तिरपिगीयतइतिव्योमसंहितायां ॥ १९ ॥ व्याप्ताह्यात्मानश्चेतनानिर्गुणाश्चसर्वात्मानःसर्वरूपाअनं ताइतिकाषायणश्रुतौव्याप्तत्वंप्रतीयते। अणुर्ह्येषआत्मायंवाएतेसिनीतःपुण्यंचपापंचेतिगौपवनश्रुतावप्यणु त्वमितोविरोधइत्यतोब्रवीति ॥ ॥ ॐउत्क्रांतिगत्यागतीनांॐ ॥ ॥ हेतूनांसकाशादणुरेव। सोस्माच्छरीरादु

क्म्यामुंलोकमभिगच्छत्यमुष्मादिमंलोकमागच्छतिसगर्भीभवतिप्रसूयतेसकर्मकुरुतइतिपौष्यायणश्रुतेः[२०]॥ तत्रस्वातंत्र्यप्रतीतेः। एकःप्रसूयतेजंतुरेकएवप्रमीयते । एकोनुभुंक्तेसुकृतमेकएवतुदुष्कृतमित्यादेश्चस्वयमेवेत्यतोवक्ति॥॥ॐ[२१]स्वात्मनाचोत्तरयोःॐ॥ ॥सएतेनैवस्वात्मनापरेणेमंगर्भमनुप्रविशतिपरेणजायतेपरेणकर्मकुरुतेपरेणनीयतेपरेणोन्नीयतेतंवाएतमभिवदंतिस्वात्मेति । एषह्यानंदमादत्तेएषह्येनंजीवमभिजीवयत्येषउद्गमयत्येषआगमयतीत्युत्तरयोर्वाक्ययोःपरमात्मनैवोक्तांत्यादयः॥[२१]॥ ॐ[२२]नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्ॐ ॥ ॥ व्याप्तोह्यात्मान श्चेतनानिर्गुणाश्चेतिव्याप्तिश्रुतेर्नाणुर्जीवइतिचेन्न। सआत्मेदंसृजतिसद्विधेदंबिभर्त्यंतर्बहिश्चसबहुधेदमनुप्रविश्यात्मनोभिनयतिसआत्मासआत्मानस्सईशःसविष्णुःसपरःपरोवरीयानितिपरमात्माधिकारत्वात्। एकशब्दैर्द्विशब्दैश्चबहुशब्दैश्चकेशवः । एकएवोच्यतेवेदैस्तावतानास्यभिन्नतेतिभविष्यत्पुराणे। तदयंप्राणोधितिष्ठति। तदुक्तमृषिणाआतेनयातमित्यादिच॥[२२]॥ ॐ[२३]स्वशब्दोन्मानाभ्यांचॐ॥ एषोह्यात्माऽप्युद्धृतोमानशक्तेस्तथाप्यसौप्रमितिंयातिवेदैः। पूर्णोचिंत्यःसर्वदेवैकयोनिःसर्वाधीशःसर्ववित्सर्वकर्तेतिवाक्यशेषेआत्मशब्दोन्मानाभ्यांच। आत्माऽमेयःपरंब्रह्मपरानंदादिकाभिधाः। वदंतिविष्णुमेवैकंना

न्यत्रासांगतिः क्वचिदितिकौर्मे ॥ [२३] ॥ ॐ२४ अविरोधश्चंदनवत् ॐ ॥ ॥ अणोरपिजीवस्यसर्वशरीरव्याप्तिर्युज्यते। यथाहरिचंदनविप्रुषएकदेशपतितायाःसर्वशरीरव्याप्तिः। अणुमात्रोप्ययंजीवःस्वदेहंव्याप्यतिष्ठति। यथाव्याप्य शरीराणिहरिचंदनविप्रुषइतिब्रह्मांडपुराणे ॥ [२४] ॥ ॐ२५ अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि ॐ ॥ ॥ सम्यगसम्यगवस्थानविशेषाद्युज्यतेचंदनस्येतिचेन्न। हृदिह्येषआत्मेतिजीवस्यापितथाऽभ्युपगमात्॥ [२५] ॥ ॐ २६ गुणाद्वालोकवत् ॐ ॥ ॥ यथाआलोकस्यप्रकाशगुणेनव्याप्तिर्ज्योतीरूपेणाव्याप्तिरेवंचिद्गुणेनव्याप्तिर्जीवरूपे णाव्याप्तिरितिवा। स्कांदेच। असम्यक्सम्यगितिचह्यवस्थाभेदतःसुराः। व्याप्त्यव्याप्तियुतास्त्वन्येचिद्गुणेनैवना न्यथा। चिद्गुणस्यस्वरूपत्वात्तद्व्याप्तिश्चेतियुज्यते। शक्तियोगात्सुराणांतुविविधाचव्यवस्थितिरिति ॥ [२६] [१२] ॥ स नित्योनिरवयवः पुण्ययुक्पापयुक्सइमंलोकममुंचावर्ततेसविमुच्यतेसएकधानसप्तधानदशधानशतधेतिगौ पवनश्रुतावेकस्याबहुत्वंप्रतीयते। सपंचधासप्तधासदशधाचभवतिशतधासहस्रधासगच्छतिसमुच्यतइति पाराशर्यायणश्रुतौबहुत्वंप्रतीयते। अतोविरोधंपरिहरति ॥ ॥ ॐ२७ व्यतिरेकोगंधवत्तथाचदर्शयति ॐ ॥ ॥ य थापुष्पाद्गंधःपृथग्गच्छतिएवमंशिनोजीवादंशाःपृथग्गच्छंति। अथैकएवसन्गंधवद्व्यतिरिच्यते। अथैकीभ

वत्यथबह्वीभवतितंयथायथेश्वरःकुरुतेतथातथाभवतिसोचिंत्यःपरमोगरीयानितिशांडिल्यश्रुतिः।अचिंत्यये
शशक्त्यैवह्येकोवयववर्जितः।आत्मानंबहुधाकृत्वाक्रीडतेयोगसंपदेतिचपाद्मे ॥[२७][१३]॥ तत्त्वमसिअहंब्रह्मास्मी
त्यादिषुजीवस्यपरेणाभेदःप्रतीयते।नित्योनित्यानांचेतनश्चेतनानां द्वासुपर्णेत्यादिषुभेदः । अतउच्यते ॥ ॥
ॐ[२८]पृथगुपदेशात्ॐ॥ ॥भिन्नोचिंत्यःपरमोजीवसंघात्पूर्णःपरोजीवसंघोह्यपूर्णः। यतस्त्वसौनित्यमुक्तोह्ययंचबं
धान्मोक्षंततएवाभिवांछेदितिसोपपत्तिककौशिकश्रुतेर्भिन्नएवजीवः॥ [२८] ॥ॐ[२९]तद्गुणसारत्वात्तुतद्व्यपदेशःप्राज्ञ
वत्ॐ॥ ॥ज्ञानानंदादिब्रह्मगुणाएवास्ययतःसारःस्वरूपंअतोऽभेदव्यपदेशः । यथासर्वगुणात्मकत्वात्सर्वात्म
कत्वंब्रह्मणउच्यतेसर्वंखल्विदंब्रह्मेति । भविष्यत्पर्वणिच भिन्नाजीवाःपरोभिन्नस्तथापिज्ञानरूपतः । प्रोच्यंतेब्र
ह्मरूपेणवेदवादेषुसर्वशइति ॥ [२९][१४] ॥ जीवस्याप्युत्पत्तिरुक्ता । अतस्तस्यसोनादिनापुण्येनपापेनचानुबद्धःप
रेणनिर्मुक्तआनंत्यायकल्पतइत्यनादिकर्मबंधआनंत्यावाप्तिश्चनयुज्यतइत्यतआह॥ ॥ॐ[३०]यावदात्मभावित्वा
च्चनदोषस्तद्दर्शनात्ॐ॥ ॥यावत्परमात्मातिष्ठत्यनाद्यनंतत्वेनएवंजीवोपि । नित्यःपरोनित्योजीवोऽनित्यास्त
स्यधातवःअतउत्पद्यतेचम्रियतेचविमुच्यतेचेतिचाग्निवेश्यश्रुतिः । आत्मानित्यःसुखदुःखेत्वनित्येजीवोनि

त्योधातुरस्यत्वनित्यइतिचभारते ॥[३०]१५॥ विज्ञानात्मासहदेवैश्चसर्वैःसआनंदःसबलःसओजःसपरेणामुंलोक मुन्नीयतेसविमुच्यतइतिजीवस्यज्ञानानंदादिरूपत्वमुच्यते।सदुःखाद्विमुक्तआनंदीभवतिसोऽज्ञानाद्विमुक्तो ज्ञानीभवतिसोऽबलाद्विमुक्तोबलीभवतिसनित्योनिरातंकोऽवतिष्ठतइतिपैंगिश्रुतावानंदादिरूपत्वंप्रतीयत इत्यतआह॥ ॥ ॐपुंस्त्वादिवत्त्वस्यसतोभिव्यक्तियोगात्[३१]ॐ ॥ ॥ यथाबालस्यसदेवपुंस्त्वंयौवनेभिव्यज्यते। एवंसतामेवानंदादीनांव्यक्त्यपेक्षयातदुक्तिः। बलमानंदओजश्चसहोज्ञानमनाकुलं। स्वरूपाण्येवजीवस्यव्य ज्यंतेपरमाद्विभोरितिगौपवनश्रुतिः॥[३१] ॥ॐनित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरनियमोवान्यथा[३२]ॐ॥ ॥ व्य क्त्यनंगीकारेदेवानांनित्योपलब्धिरानंदादीनामसुराणांनित्यानुपलब्धिर्मनुष्याणांचनित्योपलब्ध्यनुपल ब्धीप्रसज्येते। नित्यानंदोनित्यज्ञानोनित्यबलःपरमात्मानैवमसुराएवमनेवंचमनुष्याइतिह्याग्निवेश्यश्रुतिः। भविष्यत्पर्वणिच नित्यानंदज्ञानबलादेवानैवंतुदानवाः। दुःखोपलब्धिमात्रास्तेमानुषास्तूभयात्मकाः। तेषांय दन्यथादृश्यंतदुपाधिकृतंमतं। विज्ञानेनात्मयोग्येननिजेरूपेव्यवस्थितिः। सम्यग्ज्ञानंतुदेवानांमनुष्याणांवि मिश्रितं। विपरीतंतुदैत्यानांज्ञानस्यैवंव्यवस्थितिरिति ॥[३२]१६॥ ईश्वरस्यैवकर्तृत्वमुक्तं। यत्कर्मकुरुतेतदभिसं

पद्यतइतिजीवस्याप्युपलभ्यते । अतआह ॥ ॥ ॐ[३३]कर्ताशास्त्रार्थवत्त्वात्ॐ ॥ ॥ जीवस्यकर्तृत्वाभावेशास्त्र
स्याप्रयोजकत्वप्राप्तेर्जीवोपिकर्ता ॥[३३]॥ ॐ[३४]विहारोपदेशात्ॐ॥ ॥स्त्रीभिर्वायानैर्वाज्ञातिभिर्वाऽज्ञातिभिर्वेत्या
दिनामोक्षेपि ॥[३४]॥ ॐ[३५]उपादानात्ॐ॥ ॥ साधनाद्युपादानप्रतीतेश्च ॥[३५]॥ ॐ[३६]व्यपदेशाच्चक्रियायांनचेन्निर्दे
शविपर्ययःॐ ॥ ॥ आत्मानमेवलोकमुपासीतेतिक्रियायांव्यपदेशाच्च । अन्यथात्मैवलोकमितिनिर्देशःस्या
त्॥[३६]॥ तर्हिकथमीश्वरस्यैवकर्तृत्वमित्यतोवक्ति॥ ॥ॐ[३७]उपलब्धिवदनियमःॐ॥ ॥ यथाज्ञानइदंज्ञास्यामीत्य
नियमःप्रतीयते।एवंकर्मण्यपिजीवस्य।यआत्मानमंतरोयमयतीतिचश्रुतिः॥[३७]॥कुतः॥ ॥ॐ[३८]शक्तिविपर्यया
त्ॐ ॥ ॥ अल्पशक्तित्वाज्जीवस्य॥[३८]॥ ॐ[३९]समाध्यभावाच्चॐ ॥ ॥समाधानाभावाच्चास्वातंत्र्यंप्रतीयते। अ
तः॥[३९]॥ॐ[४०]यथाचतक्षोभयथाॐ॥ ॥यथातक्षणःकारयितृनियतत्वंकर्तृत्वंचविद्यते।एवंजीवस्यापि ॥[४०]॥ ॐ
[४१]परात्तुतच्छ्रुतेःॐ॥ ॥साचकर्तृत्वशक्तिःपरादेव । कर्तृत्वंकरणत्वंचस्वभावश्चेतनाधृतिः । यत्प्रसादादिमेसंति
नसंतियदुपेक्षयेतिपैंगिश्रुतिः॥[४१]॥ॐ[४२]कृतप्रयत्नापेक्षस्तुविहितप्रतिषेधावैयर्थ्यादिभ्यःॐ ॥ ॥ ततोप्रयोजक
त्वंशास्त्रस्यनापद्यते।कृतप्रयत्नापेक्षत्वात्तत्प्रेरकत्वस्य।आदिशब्देनावैषम्यादि। पूर्वकर्मप्रयत्नंचसंस्कारंचाप्यपे

क्ष्यतु। ईश्वरःकारयेत्सर्वंतच्चेश्वरकृतंस्वयं।अनादित्वाददोषश्चपूर्णशक्तित्वतोहरेरितिभविष्यत्पर्वणि। एतदेवं
नचाप्येवमेतदस्तिनचास्तिचेतिमोक्षधर्मे॥ ४२ १७॥अंशाएवहीमेजीवाअंशीहिपरमेश्वरः।स्वयमंशैरिदंसर्वंकारय
त्यचलोहरिरितिगौपवनश्रुतावंशत्वंजीवस्योपलभ्यते। नैवांशोनसंबंधोनापेक्ष्योजीवःपरस्य। तथापितुयथा
योगंफलदःप्रभुरेकराट्।ननियम्यःसकस्यापिससर्वस्यनियामकइतिभाल्लवेयश्रुतौ।अतोब्रवीति॥ ॥ॐअंशो
४३ नानाव्यपदेशादन्यथाचापिदाशकितवादित्वमधीयतएकेॐ॥मांरक्षतुविभुर्नित्यंपुत्रोहंपरमात्मनः। अवःपरे
णपितरंयोअस्यानुवेदपरएनाऽवरेण।यस्तद्वेदसपितुष्पिताऽसत्।यस्ताविजानात्सपितुष्पितासत्।द्वासुपर्णास
युजासखायेत्यादिनानानाव्यपदेशादंशोजीवः।तथाचपाराशर्यायणश्रुतिः। अंशोह्येषपरस्ययोयंपुमानुत्पद्य
तेचम्रियतेचनानाह्येनंव्यपदिशंतिपितेतिपुत्रेतिभ्रातेतिचसखेतिचेति। अन्यःपरोन्योजीवोनासावस्यकुतश्च
न।नायंतस्यापिकश्चनेत्यन्यथाचकाषायणश्रुतिः।ब्रह्मदाशाब्रह्मकितवाब्रह्मैवेमेदाशाइत्यभेदेनाप्येकेऽधीयते।
तथाचाग्निवेश्यश्रुतिः। अंशोह्येषपरस्यभिन्नंह्येनमधीयिरेऽभिन्नंह्येनमधीयिरइति। वाराहेच पुत्रभ्रातृसखित्वेन
स्वामित्वेनयतोहरिः।बहुधागीयतेवेदैर्जीवोंशस्तस्यतेनतु।यतोभेदेनतस्यायमभेदेनचगीयते। अतश्चांशत्वमु

दिष्टंभेदाभेदौनमुख्यतइति॥ [४३] ॥ॐ[४४]मंत्रवर्णात्ॐ॥पादोस्यविश्वाभूतानीति॥ [४४] ॥ॐ[४५]अपिस्मर्यतेॐ॥ममैवां
शोजीवलोकेजीवभूतःसनातनइति॥ [४५] ॥अनंशत्वश्रुतेर्गतिंचाह॥॥ॐ[४६]प्रकाशादिवन्नैवंपरःॐ ॥ अंशत्वेपि
नमत्स्यादिरूपीपरएवंविधः। यथातेजोंशस्यैवकालाग्नेःखद्योतस्यचनैकप्रकारता। यथाजलांशस्यामृतसमुद्र
स्यमूत्रादेश्च।यथाचपृथिव्यंशस्यमेरोर्विष्ठादेश्च।अभिमानिदेवतापेक्षयैतत्॥ [४६] ॥ॐ[४७]स्मरंतिचॐ॥ ॥ एतेस्वांश
कलाःपुंसःकृष्णस्तुभगवान्स्वयं।अतःपरंयदव्यक्तमव्यूढगुणबृंहितं। अदृष्टाश्रुतवस्तुत्वात्सजीवोयःपुनर्भवः।
स्वांशश्चाथोविभिन्नांशइतिद्वेधांशइष्यते।अंशिनोयत्तुसामर्थ्यंयत्स्वरूपंयथास्थितिः। तदेवनाणुमात्रोपिभेदः
स्वांशांशिनोःक्वचित्।विभिन्नांशोल्पशक्तिःस्यात्किंचित्सादृश्यमात्रयुगितिवाराहे। नत्वत्समोस्त्यभ्यधिकःकु
तोन्यइतिच॥ [४७] ॥ॐ[४८]अनुज्ञानापरिहारौदेहसंबंधाज्ज्योतिरादिवत्ॐ॥परानुज्ञयाप्रवृत्तिःपरतोबंधनिवृत्तिश्च
जीवस्यप्रतीयते अंशत्वेपिदेहसंबंधात्।यआत्मानमंतरोयमयति।तमेवंविद्वानित्यादिना। नतुपरस्य। वासुदे
वःसंकर्षणःप्रद्युम्नोनिरुद्धोहंमत्स्यःकूर्मोवराहोनारसिंहोवामनोरामोरामःकृष्णोबुद्धःकल्किरहंशतधाहंसह
स्रधाहममितोहमनंतोहंनैवैतेजायंतेनम्रियंतेनैषामनुज्ञानबंधोनमुक्तिःसर्वएतेपूर्णाअजराअमृताःपरमाःप

रानंदाइतिचतुर्वेदशिखायां।युज्यतेचज्योतिरादिवत्। यथादित्योवियद्गतस्तत्प्रकाशश्चैकप्रकारः।शुक्लंकृष्णं कनीनिकेति। तदंशस्याप्यक्ष्णोदेहसंबंधान्नतादृशीशक्तिःतदनुग्राह्यत्वंतेनैवावृतिपरिहारश्च। यथाबाह्यामृतजलस्यामृतसमुद्रस्यचैकत्वंतदंशस्यापिश्लेष्मणस्तदनुग्राह्यत्वंतेनैवविरोधिनिवृत्तिश्च । मोक्षधर्मेच यत्किंचिदिहलोकेस्मिन्देहबद्धंविशांपते। सर्वंपंचभिराविष्टंभूतैरीश्वरबुद्धिजैः। ईश्वरोहिमहद्भूतंप्रभुर्नारायणोविराट्। भूतांतरात्माविज्ञेयःसगुणोनिर्गुणोपिच। भूतप्रलयमव्यक्तंशुश्रूषुर्नृपसत्तमेति । वाराहेच अंशाश्चदेहयोग्यत्वाज्जीवाबंधादिसंयुताः। अनुग्राह्याश्चेश्वरेणनतुमत्स्यादिकोहरिः। अदेहबंधयोग्यत्वाद्यथासूर्यप्रभाक्षिणी। यथामृतसमुद्रस्यश्लेष्मादेश्चविरूपता। अनुग्राह्यत्वमन्यस्यतेनैवावृतिरोधनमिति ॥[४८]॥ ॐअँसंततेश्चाव्यतिकरःॐ ॥ ॥ अपूर्णशक्तित्वाच्चजीवस्यनमत्स्यादिसाम्यं। तथाचचतुर्वेदशिखायां। तस्यहवाएतस्यपरमस्यत्रीणिरूपाणिकृष्णोरामःकपिलइति। तस्यहवाएतस्यपरमस्यपंचरूपाणिदशरूपाणिशतरूपाणिसहस्ररूपाण्यमितरूपाणितानिहवाएतानिसर्वाणिपूर्णानिसर्वाण्यनंतानिसर्वाण्यसंमितानि। अथावराःसर्वएवापूर्णाःसर्वएवबध्यंतेथमुच्यंतेचकेचनेति॥[४९]॥ ॐ[५०]आभासएवचॐ॥ ॥रूपंरूपंप्रतिरूपोबभूवेतिप्रतिबिंब

त्वाच्चनसाम्यं । वाराहेच द्विरूपावंशकौतस्यपरमस्यहरेर्विभोः । प्रतिबिंबांशकश्चाथस्वरूपांशकएवच । प्रति
बिंबांशकाजीवाःप्रादुर्भावाःपरेस्मृताः । प्रतिबिंबेष्वल्पसाम्यंस्वरूपाणीतराणित्विति । सोपाधिरनुपाधिश्च
प्रतिबिंबोद्विधेयते । जीवईशस्यानुपाधिरिंद्रचापोयथारवेरितिपैंगिश्रुतिः ।यथैषापुरुषेच्छायाएतस्मिन्नेतदा
ततमितिचश्रुतिः॥१८॥ प्रतिबिंबानांमिथोवैचित्र्येकारणमाह ॥ ॥ ॐ[५१]अदृष्टानियमात्ॐ॥ ॥अनादिविद्या
कर्मादिवैचित्र्याद्वैचित्र्यं॥[५१] ॥ॐ[५२]अभिसंध्यादिष्वपिचैवंॐ॥ ॥ इच्छाद्वेषसुखदुःखादिवैचित्र्यंचादृष्टादेव ।
चशब्देनप्रतिक्षणवैचित्र्यंच॥[५२] ॥ ॐ[५३]प्रदेशादितिचेन्नांतर्भावात्ॐ ॥ ॥ नस्वर्गनरकभूम्यादिप्रदेशविशेषाद्वै
चित्र्यं । तत्प्राप्तेरप्यदृष्टापेक्षत्वात् । एकदेशस्थितानामेववैचित्र्यदर्शनाच्च ॥[५३]१९॥ ॥ इतिश्रीमत्कृष्णद्वैपायन
कृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यतृतीयःपादः ॥ २ ॥ ३ ॥
॥ ॐ ॥ ॥ युक्तिसहितश्रुतिविरोधंश्रुतीनामपाकरोत्यनेनपादेन । प्राणाएवेदमग्रआसुस्तेभ्योभूतानिजज्ञि
रे । भूतेभ्योंडमंडस्यांतस्त्विमेलोकाः । अथप्राणाएवानादयःप्राणानित्याइतिकाषायणश्रुतौप्राणानामनुत्प
त्तिःप्रतीयते ।नोपादानंहींद्रियाणामतोनुत्पत्तिरिष्यते । उपादानकृतासृष्टिःसर्वलोकेषुदृश्यतइतिभविष्यत्प

र्वणि। एतस्माज्जायतेप्राणोमनस्सर्वेंद्रियाणिचेतिच। अतउच्यते॥ ॥ॐ[1]तथाप्राणाःॐ॥ ॥यथाकाशाद
यःपरमात्मनउत्पद्यंतेतथाप्राणाअपि॥[1]॥ॐगौण्य[2]संभवात्ॐ॥ ॥अनादित्वश्रुतिर्गौणानादित्वापेक्षया।
मुख्यासंभवात्। नित्यान्येतानिसौक्ष्म्येणहींद्रियाणितुसर्वशः। तेषांभूतैरुपचयःसृष्टिकालेविधीयते। परेण
साम्यसंप्राप्तेःक्वस्यस्यान्मुख्यनित्यतेतिभविष्यत्पर्वणि॥[2]॥ॐ[3]प्रतिज्ञानुपरोधाच्चॐ॥ ॥सइदंसर्वमसृजत
ति॥[3]॥ द्विधाहेवेंद्रियाणिनित्यानिचानित्यानिच। तत्रनित्यंमनोनादित्वात्। नह्यमनाःपुमांस्तिष्ठत्यनित्या
न्यन्यानीतिगौपवनश्रुतौमनसोनुत्पत्तिःसयुक्तिकाश्रूयते। अतआह॥ ॥ॐ[4]तत्प्राक्श्रुतेश्चॐ॥ ॥मनःस
र्वेंद्रियाणिचेतिपूर्वोक्तत्वान्नानुत्पत्तिर्मनसोयुज्यते। पूर्वंमनःसमुत्पन्नंततोन्येषांसमुद्भवः। तदनुत्पत्तिवचनम
ल्पोपचयकारणादितिवायुप्रोक्तवचनंचशब्देनगृहीतं॥[4]॥नित्ययाऽनित्ययास्तौमिपरमात्मानमच्युतमिति।
वाग्वावनित्यानह्येषोत्पद्यतेऽस्यांहिश्रुतिरवतिष्ठतइतिसयुक्तिकंपौष्यायणश्रुतौवाचोनुत्पत्तिरुच्यते। अतो
ब्रवीति॥ ॥ॐ[5]तत्पूर्वकत्वाद्वाचःॐ॥ ॥तस्मान्मनएवपूर्वरूपंवागुत्तररूपमितिमनःपूर्वकत्वाद्वाचोनानु
त्पत्तिः। वागिंद्रियस्यनित्यत्वंश्रुतिसन्निधियोग्यता।उत्पत्तिर्मनसोयस्मान्ननित्यत्वंकुतश्चनेतिवायुप्रोक्तेः॥[5]॥

सप्तप्राणाःप्रभवंतितस्मादितिश्रुतिः । सप्तैवमारुताबाह्येप्राणाःसप्ततथात्मनि । अधिदैवेतथाध्यात्मेसंख्यासा
म्यंविदोविदुरितिचस्कांदे । द्वादशवाएतेप्राणाद्वादशमासाद्वादशादित्याद्वादशराशयोद्वादशग्रहाइतिकौं
डिन्यश्रुतौद्वादशप्राणादृश्यंते । अतोवक्ति ॥ ॥ ॐसप्तगतेर्विशेषितत्वाच्चॐ ॥ ॥ ज्ञानेंद्रियापेक्षयासप्तत्वं ।
गुहाशयानिहिताःसप्तसप्तेतिविशेषणात्। सप्तप्राणास्त्ववगतेःपंचप्राणाश्चकर्मणः । एवंप्राणद्वादशकंशरीरेनि
त्यसंस्थितमितिभविष्यत्पर्ववचनंचशब्दात् ॥ ॥ ॐहस्तादयस्तुस्थितेऽतोनैवंॐ ॥ ॥ हस्तादीनांकर्मविषय
त्वान्नसहपाठः । संसारस्थितिहेतुत्वात्स्थितंकर्मविदोविदुः । तस्मादुद्गतिहेतुत्वाज्ज्ञानंगतिरिहोच्यतइति
वायुप्रोक्ते ॥ ४ ॥ दिवीवचक्षुराततमितिव्याप्तिःप्रतीयते । दूरश्रवणदर्शनादियुक्तिश्च । अणुभिःपश्यत्य
णुभिःशृणोतिप्राणावाअणवःप्राणैर्ह्येतद्भवतीतिकौंडिन्यश्रुतिः । अतोवक्ति ॥ ॥ ॐअणवश्चॐ ॥ ॥
तद्यथाह्यणुनश्चक्षसःप्रकाशोव्याततएवमेवास्यपुरुषस्यप्रकाशोव्याततोऽणुर्ह्येषवैपुरुषोभवतीतिशांडिल्यश्रु
तिः ॥ ६ ॥ नैषप्राणउदेतिनास्तमेत्येकलएवमध्येस्थाताअथैनमाहुर्मध्यमइतीतिमुख्यप्राणस्यानुत्पत्तिःश्रूय
ते । यत्प्राप्तिर्यत्परित्यागउत्पत्तिर्मरणंतथा । तस्योत्पत्तिर्मृतिश्चैवकथंप्राणस्ययुज्यतइतिचयुक्तिर्वायुप्रोक्ते।

आत्मतएषप्राणोजायतइतिच। अतआह॥ ॥ॐश्रेष्ठश्चॐ॥ ॥ सौक्ष्म्येणह्वाएषोवतिष्ठतेस्थूलत्वेनोदेतिसू
क्ष्मश्चाथोस्थूलश्चप्रकृतितःसूक्ष्मोन्यतःस्थूलोथैनमाहुःसादिरनादिरितीतिगौपवनश्रुतेः॥ ९ ॥ॐनवायुक्रिये
पृथगुपदेशात्ॐ॥ ॥चेष्टायांबाह्यवायौचमुख्यप्राणेचगीयते। प्राणशब्दस्त्रिषुह्येषुमुख्येमुख्यःप्रकीर्तितइतिवा
युक्रिययोरपिव्यपदेशादुत्पत्तिश्रुतिस्तयोर्नस्यात्। सप्राणमसृजत खंवायुर्ज्योतिरापःतपोमंत्राःकर्मेतिपृथगु
पदेशात्। भूतानिचेष्टामंत्राश्चमुख्यप्राणादिदंजगत्। मुख्यप्राणःपरस्माच्चनपरःकारणान्वितइतिवायुप्रोक्ते
॥ १० ॥ प्राणादिदमाविरासीत्प्राणोधत्तेप्राणेलयमभ्युपैतिनप्राणःकिंचिदाश्रितइत्याग्निवेश्यश्रुतौ।यदाश्रयाद
स्यचेष्टासोन्यंकथमुपाश्रयेत्। यथाप्राणस्तथाराजासर्वस्यैकाश्रयोभवेदितिचयुक्तिर्भारते। प्राणस्यैतद्वशेस
र्वंप्राणःपरवशेस्थितः।नपरःकिंचिदाश्रित्यवर्ततेपरमोयतइतिपैंगिश्रुतिः। अतआह॥ ॥ ॐचक्षुरादिवत्तु
त्सहशिष्ट्यादिभ्यःॐ॥ ॥ चक्षुरादिवन्मुख्यप्राणोपिपरमात्मवशएव। सर्वंह्येवैतत्परमेवतिष्ठतेप्राणश्चप्राणा
श्चप्राणिनश्चसह्येकएवैतान्नयत्युन्नयतिवशीकरोतीतिगौपवनश्रुतौचक्षुरादिभिःसहतद्वशत्वेनैवशंसनात्।
सर्वकर्तापिसन्प्राणःपरमाधारतःस्थितः। कथमेवान्यथासस्याद्यतोनैवेश्वरद्वयं। अवांतरेश्वरत्वेनतस्येश्वरव

चोभवेत्। अतोमध्यमतामाहुस्तस्यवेदेषुवेदिनः। अनन्येश्वरताप्राणेतदन्येश्वरवर्जनात्। यतोविशेषवाक्ये नद्वियंतेसमतावचः। नान्योतोस्तिद्रष्टा नान्यदतोस्तिद्रष्ट्रित्यादिवचनयुक्तयश्चादिशब्देनोक्ताः॥[११]॥ ॐअकरणत्वाच्चनदोषस्तथाहिदर्शयतिॐ ॥[१२]॥ इतरेषांप्राणानांकरणत्वान्मुख्यप्राणस्यचाकरणत्वात्तस्यान्येभ्य उत्तमत्वंयुज्यते। मांडव्यश्रुतिश्च। तानिहवाएतानिसर्वाणिकरणान्यथप्राणएवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्यइत्याचक्षतइति॥[१२]॥ सर्वेवाएतेमुख्यदासाःप्राणोपानोव्यानउदानःसमानइति अथप्राणोवावसम्राडिति कौंडिन्यश्रुतिः। प्राणापानादयःसर्वेमुख्यदासायतोऽनिशं। अतस्तदाज्ञयानित्यंस्वानिकर्माणिकुर्वतइतियुक्तिर्वायुप्रोक्ते। मुख्यस्यैवस्वरूपाणिप्राणाद्याःपंचवायवः। सएवप्राणिनांदेहेपंचधावर्ततेनिशमितिगौपवन श्रुतिः। अतोवक्ति॥[१३]॥ ॐपंचवृत्तिर्मनोवद्व्यपदिश्यतेॐ॥॥ अथपंचवृत्त्यैतत्प्रवर्तते प्राणोवावपंचवृत्तिः प्राणोपानोव्यानउदानःसमानइति। तेभ्योवाएतेभ्यःपंचदासाःप्रजायंते। प्राणाद्वावप्राणोऽपानादपानोव्यानाद्व्यानउदानादुदानःसमानादेवसमानः। यथाहवैमनःपंचधाव्यपदिश्यते मनोबुद्धिरहंकारश्चित्तंचेतनेति तेभ्योवाएतेभ्यःपंचदासाःप्रजायंतेमनसोवावमनोबुद्धेर्बुद्धिरहंकारादहंकारश्चित्ताच्चित्तंचेतनायाएवचेतनैव

मितीति ॥[१३]८॥प्राणएवाधस्तात्प्राणउपरिष्टात्प्राणोमध्यतःप्राणःसर्वतःप्राणएवेदंसर्वमितिप्राणस्यव्याप्तिःप्रती
यते। यतःसर्वंजगद्व्याप्यतिष्ठतिप्राणएवतु। अतोधृतंजगत्सर्वमन्यथाकेनधार्यतइतियुक्तिर्वायुप्रोक्ते । अणु
नैतत्सृज्यतेऽणुनैतद्धार्यतेअणौलयमभ्युपैतिप्राणोवाअणुःप्राणोह्येतद्भवतीतिसौत्रायणश्रुतिः। अतआह॥
ॐ[१४]अणुश्चॐ ॥ ॥ सवाएषप्राणोऽणुर्महान्नामांऽतर्वाणुर्बहिर्महान्। प्राणोवाईशितव्येशईशोह्यसौसर्वस्येशित
व्यश्चपरस्येतिहिकौंडिन्यश्रुतिः ॥[१४]९॥ करणत्वंप्राणानामुक्तं। जीवस्यकरणान्याहुःप्राणानेतांस्तुसर्वशः । य
स्मात्तद्दशगाएतेदृश्यंतेसर्वदेहिष्वितिसौत्रायणश्रुतौसयुक्तिकंजीवकरणत्वंप्रतीयते । ब्रह्मणोवाएतानिकर
णानिचक्षुःश्रोत्रंमनोवागितितद्ध्येतैःकारयतीतिकाषायणश्रुतौ। अतआह ॥ ॥ ॐज्योति[१५]राद्यधिष्ठानंतुत
दामननात्ॐ॥ ॥ यज्ज्योतिराद्यधिष्ठानंब्रह्मतदेवैतैःकरणैःप्रवर्तयति। यःप्राणेतिष्ठन्नित्यादितदामननात्।[१५]।
कथंजीवकरणत्वश्रुतिरित्यतोवक्ति॥ ॥ ॐ[१६]प्राणवताशब्दात्ॐ ॥ ॥ जीवेनैवस्वकरणैःकारयतिपरमात्मा ।
अतोनविरोधः । एषह्यनेनात्मनाचक्षुषादर्शयतिश्रोत्रेणश्रावयतिमनसामनयतिबुद्ध्याबोधयतितस्मादेता
वाहुःसृतिरसृतिरितीतिभाल्लवेयश्रुतेः । करणैःकारणंब्रह्मपुरुषापेक्षयाखिलं। श्रोत्रादिभिःकारयतिकरणा

नीत्यतोविदुः । नजीवापेक्षयामुख्यंकारयेत्परमेश्वरः । केवलात्स्वेच्छयातस्मान्मुख्यत्वंतस्यनिश्चितमितिवा
राहे ॥[१६]॥ ॐ[१७]तस्यचनित्यत्वात्ॐ ॥ ॥ अनादिनित्यत्वाज्जीवकरणसंबंधस्ययुज्यतेतत्करणत्वश्रुतिः। अथा
वियोगीनिकरणैर्वावनवियुज्यतेदेहेनैववियुज्यतइत्येतद्वावकरणानांकरणत्वंयद्वावनवियुज्यतइतिगौपवन
श्रुतिः । चशब्दःकरणसंबंधग्राही ॥[१७]॥ अथेंद्रियाणिप्राणावाइंद्रियाणिप्राणाहीदंद्रवंतीतिसयुक्तिकापौत्राय
णश्रुतिः सामान्येनप्राणानामिंद्रियत्वंवक्ति । द्वादशैवेंद्रियाण्याहुर्मनोबुद्धीतुद्वादशेइतिचकाषायणश्रुतिः ।
अतःकस्येंद्रियत्वंनिवार्यमित्यतोवक्ति ॥ ॥ ॐ[१८]तइंद्रियाणितद्व्यपदेशादन्यत्रश्रेष्ठात्ॐ ॥ ॥ मुख्यप्राणमृतेतत
एवेंद्रियाणि । द्वादशैवेंद्रियाण्याहुःप्राणोमुख्यस्त्वनिंद्रियं ।द्रवतांहींद्रियाणांतुनियंताप्राणएकराडितिपौत्राय
णश्रुतिः । श्रोत्रादीनितुपंचैवतथावागादिपंचकं । मनोबुद्धिसहायानिद्वादशैवेंद्रियाणितु । विषयद्रवणात्तेषा
मिंद्रियत्वमुदाहृतं । तेषांनियामकःप्राणःस्थितएवाखिलप्रभुरितिबृहत्संहितायां ॥[१८]॥ ॐ[१९]भेदश्रुतेःॐ ॥ ॥
स्थितएवहीदंमुख्यप्राणःकरोतिकारयतिबलतिबालयतिधत्तेधारयतिप्रभुंवाएनमाहुरथेंद्रियाणिनस्थिता
निनकुर्वंतिनकारयंतिनबलंतिनबालयंतिनदधतेनधारयंतितानिहवाएतान्यबलानितस्मादाहुरिंद्रियाणि

करणानीतिपौत्रायणश्रुतेः॥ १९ ॥ ॐवैलक्षण्याच्चॐ॥ ॥पुरुषापेक्षयाप्रवृत्तिरिंद्रियाणांदृश्यते।नतुमुख्यस्य। प्राणाभयएवैतस्मिन्पुरेजाग्रतीतिश्रुतिः॥ २० ११ ॥ विरिंचोवाइदंविरेचयतिविदधातिब्रह्मावावविरिंचएतस्माद्धीमेरूपनामनीइतिगौपवनश्रुतिः। यस्माद्विरेचयेत्सर्वंविरिंचस्तेनभण्यते। एकोहिकर्ताजगतोब्रह्मैवतुचतुर्मुखइतियुक्तिर्ब्राह्मे। अथकस्मादुच्यतेपरमइतिपरमाध्येतेनामरूपेव्याक्रियेतेतस्मादेनमाहुःपरमइति। अथकस्मादुच्यतेब्रह्मेतिबृहत्त्वाद्बृंहणत्वाच्चेत्याग्निवेश्यश्रुतिः। अतआह॥ ॥ ॐसंज्ञामूर्तिक्लृप्तिस्तुत्रिवृत्कुर्वतउपदेशात्ॐ॥ ॥नामरूपक्लृप्तिःपरादेव । सर्वाणिरूपाणिविचित्यधीरोनामानिकृत्वाभिवदन्यदास्तइतिश्रुतेः। त्रिवृत्कुर्वतइतिहेतुगर्भः। त्रिवृत्करणापेक्षत्वान्नामरूपयोः। सर्वनाम्नांचरूपाणांव्यवहारेषुकेशवः। एकएवयतःस्रष्टाब्रह्माद्यास्तदवांतराइतिपाद्मे। त्रिवृत्क्रियायतोविष्णोरूपंचतदपेक्षया। रूपापेक्षंतथानामव्यवहारस्तदात्मकः। अतोनाम्नश्चरूपस्यव्यवहारस्यचैकराट्। हरिरेवयतःकर्तापिताऽतोभगवान्प्रभुरितिचब्रह्मांडे॥ ॥२१ १२॥अद्भ्योहीदमुत्पद्यतेआपोवावमांसमस्थिचभवंत्यापःशरीरमापएवेदंसर्वमितिकौंडिन्यश्रुतिः। अम्मयंतुयतोमांसमतस्तृप्तिश्चमांसतइतिचभारते।पृथिवीश्शरीरमाकाशमात्मेतिच। अतोब्रवीति॥॥ ॐमांसादि २२

भौमंयथाशब्दमितरयोश्चॐ ॥ ॥ यत्कठिनंसापृथिवीयद्द्रवंतदापोयदुष्णंतत्तेजइतिश्रुतेर्मांसाद्येवभौमंनसर्वं शरीरं। अस्तेजसोश्चकार्यंयथाशब्दमंगीकर्तव्यं। यद्वावाथोविमिश्रंमिश्राच्चेतद्भवतिमिश्राणिहिभूतानित स्मादेवैवमाचक्षतेभूतानीतिकाषायणश्रुतिः। पंचभूतात्मकंसर्वंतदप्येकविवक्षया। एकभूतात्मकत्वेनव्यव हारस्तुवैदिके। भौममित्येवकाठिण्याच्छौक्ल्यादौदकमित्यपि। तेजिष्ठत्वात्तैजसंचयथाऽस्त्रांवचनंश्रुताविति वायुप्रोक्ते॥[२२]॥ कथंतर्हिविशेषवचनमित्यतआह॥ ॥ ॐवैशेष्यात्तुतद्वादस्तद्वादःॐ ॥ ॥भूतानांविशेषसं योगादेवविशेषव्यवहारः। पार्थिवानांशरीराणामर्धेनपृथिवीस्मृता॥इतरेर्धेत्रिभागिन्यआपस्तेजस्तुभागतः। इतिसामान्यतोज्ञेयंभेदश्चप्रतिपूरुषं। स्वर्गस्थानांशरीराणामर्धंतेजउदाहृतमितिबृहत्संहितायां। सर्वाध्याया र्थावधारणार्थाऽध्यायांतेद्विरुक्तिः। गारुडेच। अध्यायांतेद्विरुक्तिःस्याद्वेदेवावैदिकेपिवा। विचारोयत्रसज्जे तपूर्वोक्तस्यावधारणे। अनुक्तानांप्रमाणानांस्वीकारश्चकृतोभवेत्। विनिंद्यचेतरान्मार्गान्संपूर्णफलतातथे ति ॥[२३/१३]॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीया ध्यायस्यचतुर्थःपादः ॥ २ ॥ ४ ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॥ ॐ ॥ साधनविचारोयमध्यायः ॥ वैराग्यार्थंगत्यादिनिरूपणाप्रथमपादे । भूतबंधोहि बंधः । भूतबंधस्तुसंसारोमुक्तिस्तेभ्योविमोचनमितिवाराहे । तच्चमरणेभवति । भूतानांविनिवृत्तिस्तुमरणंसमुदाहृतं । भूतानांसंप्रयोगश्चजनिरित्येवपंडितैरिति भारते । अतःकिंसाधनैरित्यतआह ॥ ॥ ॐतदंतरप्रतिपत्तौरंहतिसंपरिष्वक्तःप्रश्ननिरूपणाभ्यांॐ॥ ॥ शरीरांतरप्रतिपत्तौभूतसंपरिष्वक्तएवगच्छति । वेत्थयथापंचम्यामाहुतावापःपुरुषवचसोभवंति । इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीतिप्रश्नपरिहाराभ्यां ॥ १/१ ॥ ॥ ॐत्र्यात्मकत्वात्तुभूयस्त्वात्ॐ॥ ॥ अपशब्दस्तुत्र्यात्मकत्वाद्युज्यते । भूयस्त्वाच्चापां । तापापनोदोभूयस्त्वमंभसोवृत्तयस्त्विमाइतिभागवते ॥ २/२ ॥ ॥ ॐप्राणगतेश्चॐ॥ ॥ यत्रवावभूतानितत्रकरणानिनित्यानिहवाएतानिभूतानिकरणानिच।नैतानिकदाचिद्वियुज्यंतेनचविलीयंतइतिभाल्लवेयश्रुतेःप्राणगतेर्भूतान्यपिसहगच्छंतीतिसिद्धं ॥ ३/३ ॥ ॥ ॐअग्न्यादिगतिश्रुतेरितिचेन्नभाक्तत्वात्ॐ॥ ॥ यत्रास्यपुरुषस्यमृतस्याग्निंवागप्येतिवातंप्राणइत्यादिश्रुतेर्नप्राणानांजीवेनसहगतिरितिचेन्न । भागतोऽग्न्यादिप्राप्तेः । पुरुषस्यमृतौब्रह्मन्प्राणाभागतएवतु । अधिदैवंप्राप्नुवंतिभागतोनुव्रजंतितं । पुनःशरीरसंप्राप्तौतमेवानुविशंतिचे

तिब्राह्मे । ब्रह्मांडेच मृतिकालेजहत्येनंप्राणाभूतानिपंचच । भागतोभागतस्त्वेनमनुगच्छंतिसर्वशइति ॥४॥ ॥ ॥ ॐप्रथमेश्रवणादितिचेन्नताएवह्युपपत्तेःॐ ॥ ॥ तस्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतीतिप्रथमाग्नौश्रूयतेनभूतानिजुह्वतीति । अतोनेतिचेन्न । ताएवप्रस्तुताआपःश्रद्धारूपेणहूयंते इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीत्युपसंहारोपपत्तेः ॥५॥ ॥ ॐअश्रुतत्वादितिचेन्नेष्टादिकारिणांप्रतीतेःॐ ॥ ॥ अग्न्यादिगतिःप्रत्यक्षतःश्रूयते।अतःप्रत्यक्षाश्रवणान्नयुक्तमितिचेन्न। अथैनंयजमानंकिंनजहातिभूतान्येवभूतैरेवगच्छतिभूतैर्भुंक्तेभूतैरुत्पद्यतेभूतैश्चरतिभूतैर्विचरतीतिकौंडिन्यश्रुतौप्रतीतेः ॥६॥ अपामसोममममृताअभूमेत्यादिश्रुतिविरोधइत्यतोवक्ति॥ ॥ ॐभाक्तंवाऽनात्मवित्त्वात्तथाहिदर्शयतिॐ ॥ ॥ भागतस्तदमृतत्वं नान्यःपंथाअयनायविद्यतइतिश्रुतेरात्मविदएवहिमुख्यं। वाशब्दात्पारंपर्येणात्मविदपेक्षयावा । तथाहिश्रुतिः । सएनमविदितोनभुनक्तियथावेदोवाननूक्तोन्यद्वाकर्माकृतंयदिहवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतएवात्मानमेवलोकमुपासीतसयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते । अमृतोवावसोमपोभवतियावदिंद्रोयावन्मनुर्यावदादित्यः । कर्मणाज्ञानमातनोति

ज्ञानेनामृतीभवतिअथामृतानिकर्माणियतएनममृतत्वंनयंतीतिच ॥७॥ कृतस्यकर्मणोभोगेनक्षयान्मुक्तिरि
त्यतआह ॥॥ ॐकृतात्ययेनुशयवान्दृष्टस्मृतिभ्यांॐ ॥ ॥ततःशेषेणेमंलोकमायातिपुनःकर्मकुरुतेपुनर्गच्छ
तिपुनरागच्छतीतिश्रुतेः। भुक्तशेषानुशयवानिमांप्राप्यभुवंपुनः। कर्मकृत्वापुनर्गच्छेत्पुनरायातिनित्यशः।
आचतुर्दशमाद्वर्षात्कर्माणिनियमेनतु। दशावराणांदेहानांकारणानिकरोत्ययं। अतःकर्मक्षयान्मुक्तिःकुत
एवभविष्यतीत्यादिस्मृतेश्चशेषवानेवायाति ॥८॥ यथेतमेवगच्छतियथेतमागच्छतिसभुंक्तेसकर्मकुरुतेसप
रिवर्ततइतिगतिप्रकारेणागतिःप्रतीयते। अतोब्रूते ॥॥ ॐयथेतमनेवंचॐ ॥ ॥धूमादभ्रमभ्रादाकाशमाका
शाच्चंद्रलोकंयथेतमाकाशमाकाशाद्वायुंवायुर्भूत्वाधूमोभवतिधूमोभूत्वाऽभ्रंभवत्यभ्रंभूत्वामेघोभवतिमेघोभू
त्वाप्रवर्षतीतिकाषायणश्रुतेर्यथागतमन्यथाच ॥९॥ॐचरणादितिचेन्नतदुपलक्षणार्थेतिकार्ष्णाजिनिःॐ ॥
तद्यइहरमणीयचरणारमणीयांयोनिमापद्यंतेकपूयचरणाःकपूयामितिश्रुतेश्चरणफलमेवगमनागमनंनयज्ञा
दिकृतः। आचारइतिसंप्रोक्तःकर्मांगत्वेनशुद्धिदः। अशुद्धिदस्त्वनाचारश्चरणंतूभयंस्मृतमितिस्मृतेरितिचे
न्न।यज्ञाद्युपलक्षणार्थाचरणादिश्रुतिरितिकार्ष्णाजिनिर्मन्यते॥ १० ॥ॐआनर्थक्यमितिचेन्नतदपेक्षत्वात्ॐ ॥

ब्रह्मसू० ॥ तर्हिरमणीयाःकपूयाइत्येवस्यात्। चरणशब्दस्यानर्थक्यमितिचेन्न । चरणापेक्षत्वाद्रमणीयत्वादेस्तज्ज्ञाप भाष्यं.
॥४५॥ नार्थत्वेनोपपत्तेः ॥[११]॥ ॐ[१२]सुकृतदुष्कृतेएवेतितुबादरिःॐ ॥ ॥ धर्मंचरतमाधर्ममित्यादिप्रयोगात्सुकृतदु तृ. प्र.
ष्कृतेएवचरणशब्दोक्तेइतिबादरिर्मन्यते। तुशब्दात्स्वसिद्धांतोपिसएवेतिसूचयति। तुशब्दस्तुविशेषेस्यात्स्व ११।१५
सिद्धांतेवधारणेइतिनाममहोदधौ ॥[१२]१०॥ पुण्यकृतामेवगमनागमनेनेतरेषामित्यतआह ॥ ॥ ॐ[१३]अनिष्टादि
कारिणामपिचश्रुतंॐ ॥ ॥ तद्यइहशुभाकृतोयेचाशुभकृतस्तेऽशुभमनुभूयावर्ततेपुनःकर्मकुर्वंतिपुनर्गच्छं
तिपुनरागच्छंतीतिभाल्लवेयश्रुतौ ॥[१३]॥ ॐ[१४]संयमनेत्वनुभूयेतरेषामारोहावरोहौतद्गतिदर्शनात्ॐ ॥ ॥ सं
यमनमनुभूयकेषांचिदारोहःकेषांचिदवरोहः। तुशब्दोवधारणे। सर्वेवाएतेऽशुभकृतःसंयमनेप्रपतंतितत्रयेप
रद्विषोगुरुद्विषःश्रुतिद्विषस्तदवमंतारःशठामूर्खाइतितेवैततोऽवरुद्यतमसिप्रपतंतिनैवेतउत्तिष्ठंतेपिकर्हिचिद्व
त्रंवाएतदित्याहुरथयेऽन्येब्रह्मद्विषःस्तेनाःसुरापाइतितेवैतदनुभूयेमंलोकमनुव्रजंतीतिकौंठरव्यश्रुतेः ॥[१४]॥
ॐ[१५]स्मरंतिचॐ ॥ ॥ गच्छंतिपापिनःसर्वेनरकंनात्रसंशयः। तत्रभुक्त्वापतंत्येवयेद्विषंतिजनार्दनं । महातम 
सिमग्नानांनतेषामुत्थितिःक्वचित्। इतरेषांतुपापानामुत्थानंविद्यतेपिच । सुखस्यानंतरंदुःखंदुःखस्यानंतरं

सुखं । इतिसर्वत्रनियमः पंचकष्टेतुतत्सदेत्यादि ॥ [१५] ११ ॥ ॥ ॐअपिससॐ ॥ ॥ [१६] रौरवोथमहांश्चैववह्निर्वैतर
णीतथा । कुंभीपाकइतिप्रोक्तान्यनित्यनरकाणिच । तामिस्रश्चांधतामिस्रोद्वौनित्यौसंप्रकीर्तितौ । इतिस
प्तप्रधानानिबलीयस्तूत्तरोत्तरं । एतानिक्रमशोगत्वैवारोहोथावरोहणमितिभारते ॥ [१६] १२॥ ईश्वरस्यनरकायु
क्तेः । सर्वंविसृजतिसर्वंविलापयतिसर्वंरमयतिसर्वंनरमयतिसर्वंप्रवर्तयत्यंतरस्मिन्निविष्टइतिकौषारवश्रुति
विरोधइत्यतोवक्ति ॥ ॥ ॐ[१७]तत्रापिचतद्व्यापारादविरोधःॐ॥ ॥ चशब्दाददुःखानुभवेन । सस्वर्गेसभूमौ
सनरकेसोंधेतमसिप्रवृत्तिकृदेकएवानुविष्टोनासौदुःखभुगीश्वरः प्रभुत्वात्सर्वंपश्यतिसर्वंकारयतिनासौदुःखभु
ग्यएवंवेदेतिपौत्रायणश्रुतेरविरोधः । नरकेपिवसन्नीशोनासौदुःखभुगुच्यते । नीचोच्चतैवदुःखादेर्भोगइ
त्यभिधीयते । नासौनीचोच्चतांयातिपश्यत्येवप्रभुत्वतइतिभागवततंत्रे ॥ [१७] १३ ॥ अथैतयोःपथोर्नकतरेणच
गच्छंतितानीमानिक्षुद्रमिश्राण्यसकृदावर्तीनिभूतानिभवंतिजायस्वम्रियस्वेत्येत्तत्तृतीयंस्थानमितिगतिस्वा
तंत्र्यंभूतानांप्रतीयतइत्यतआह ॥ ॥ ॐविद्याकर्मणोरितितुप्रकृतत्वात्ॐ ॥ ॥ [१८] विद्याकर्मापेक्षयैतद्वचनं ।
तयोरपिप्रकृतत्वात् । विद्यापथःकर्मपथोद्वौपंथानौप्रकीर्तितौ । तद्वर्जितस्त्रिधायातितिर्यग्वानरकंतमइति

भारते ॥[१८]१४॥ यत्रदुःखंसुखंतत्रसर्वत्रापिप्रतीयते । अपिनीचगतौकिंचित्किमुमानुषदेहिनइतिवचनान्महात
मस्यपिसुखप्राप्तिरित्यतआह ॥ ॥ ॐ[१९]नतृतीयेतथोपलब्धेःॐ ॥ ॥ अथाविद्वानकर्माऽवाग्गच्छतित्रिधाहवा
ऽवाग्गतिस्तिर्यग्यातनातमइतिद्वेवावसुखानुवृत्तेनतमःसुखानुवृत्तंकेवलंह्येवात्रदुःखंभवतीतिश्रुतेर्नतृतीया
वाग्गतौसुखं ॥ [१९] ॥ ॐ[२०]स्मर्यतेपिचलोकेॐ ॥ ॥ तिर्यक्षुनरकेचैवसुखलेशोविधीयते । नांधेतमसिमग्नानांसु
खलेशोपिकश्चनेतिभविष्यत्पर्वणि । लोकसिद्धंचैतत् । चशब्दाल्लोकसिद्धिरपिस्मार्तेत्याह । अतिप्रियेयथा
राजानदुःखंसहतेक्वचित् । अत्यप्रियेसुखमपितथैवपरमेश्वरइतिब्राह्मे ॥ [२०] ॥ ॐ[२१]दर्शनाच्चॐ ॥ ॥ नारायण
प्रसादेनसमिद्धज्ञानचक्षुषा । अत्यंतदुःखसंलीनान्निश्शेषसुखवर्जितान् । नित्यमेवतथाभूतान्विमिश्रांश्चग
णान्बहून् । निरस्ताशेषदुःखांश्चनित्यानंदैकभागिनः । अपश्यत्त्रिविधान्ब्रह्मासाक्षादेवचतुर्मुखइतिदर्शनवच
नाच्चपाद्मे ॥ [२१] ॥ ॐ[२२]तृतीयेशब्दावरोधःसंशोकजस्यॐ ॥ ॥ तृतीयेतृतीयतमसःश्रवणादेवशब्दानुसारेणसं
शोकजमोहप्राप्तिः ॥ [२२] ॥ ॐ[२३]स्मरणाच्चॐ ॥ ॥ महातमस्त्रिधाप्रोक्तमूर्ध्वंमध्यंतथाधरं । श्रवणादेवमूर्छादिरध
रस्ययतोभवेत् । तस्मान्नविस्तरेणैतत्कथ्यतेराजसत्तमेतिकौर्मे ॥ [२३] १५ ॥ धूमोभूत्वाऽभ्रंभवतीत्याद्यन्यभावःश्रू

यते। सकथमित्यतोब्रवीति ॥ ॥ ॐ[२४] तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ ॥ धूमादिषुप्रविश्यतद्गतौगतिस्तत्स्थितौस्थितिरित्यादिरेवतद्भावापत्तिः। नह्यन्यस्यान्यभावोयुज्यते। नचतत्पदप्राप्तिः। गारुडेच धूमादिभावप्राप्तिश्चतद्गतौगतिरेवतु। स्थितौस्थितिःप्रवेशश्चलघुत्वादिस्तथैवच। नह्यन्यस्यान्यथाभावोनचतत्पदमिष्यते। विद्यागम्यंपदंयस्मान्नतत्प्राप्यंहिकर्मणा। एकदेशस्वभावेनवागभेदापियुज्यते। यथाजीवःपरंब्रह्मब्रह्मेदंजगदित्यपीति ॥ [२४/१६] ॥ बहुस्थानगमनात्कल्पांतमप्येवंस्यादिति। अतआह ॥ ॥ ॐ[२५] नातिचिरेणविशेषात् ॐ ॥ ॥ तद्यइहरमणीयचरणाअभ्याशोहयत्तेरमणीयांयोनिमापद्यंतइतिविशेषान्नातिचिरेण। स्वर्गाल्लोकादवाक्प्राप्तोवत्सरात्पूर्वमेवतु। मातुःशरीरमाप्नोतिपर्यटन्यत्रतत्रचेतिनारदीये ॥ [२५/१७] ॥ तइहव्रीहियवाओषधिवनस्पतयस्तिलामाषाइतिजायंतइतिश्रवणादनर्थफलत्वंयज्ञादेरिति। अतोवक्ति ॥ ॥ ॐ[२६] अन्याधिष्ठितेपूर्ववदभिलापात् ॐ ॥ ॥ अन्याधिष्ठितेव्रीह्यादिशरीरेप्रवेशः। नतुभोगोस्य। धूमोभूत्वाऽभ्रंभवतीत्यादिपूर्वोक्तिवत्। सोवाग्गतःस्थावरान्प्रविश्याभोगेनैवव्रजन्स्थूलंशरीरमेतिस्थूलाच्छरीराद्भोगाननुभुंक्तइत्यभिलापात्कौषारवश्रुतौ। स्वर्गादवाग्गतोदेहीव्रीह्यादीतरदेहगः। अभुंजंस्तुक्रमेणैवदेहमाप्नोतिकालतइतिवा

राहे ॥ ॥ ॐ[२७]अशुद्धमितिचेन्नशब्दात्ॐ ॥ ॥ हिंसारूपत्वात्पापस्यापिसंभवाद्दुःखंचभवत्वितिचेन्न । शब्दवि
हितत्वात् । हिंसात्ववैदिकीयातुतयानर्थोध्रुवंभवेत् । वेदोक्तयाहिंसयातुनैवानर्थःकथंचनेतिवाराहे॥ [२७/१८]॥ स्व
र्गादवाग्गतश्चापिमातुरेवोदरंव्रजेदितिवचनाद्यएवगृहीभवतियोवारेतःसिंचतितमेवानुविशतीतिश्रुतिःक
थमित्यतआह ॥ ॥ॐ[२८]रेतःसिग्योगोथॐ ॥ ॥ ततोरेतस्सिचमेवानुप्रविशत्यथमातरमथप्रसूयतेसकर्मकुरुत
इतिकौंठरव्यश्रुतेःपितरमेवप्रथमतःप्रविशति । मातृप्राप्तेःपश्चादपिभाव्यत्वात् ॥ १९ ॥ देहंगर्भस्थितंक्वापि
प्रविशेत्स्वर्गतोगतइतिवचनात्पश्चादेवप्रविशतीति । अतआह ॥ ॥ ॐयोने[२९]ःशरीरंॐ ॥ ॥ पितृशरीरान्मा
तृयोनिमनुप्रविश्यततएवशरीरमाप्नोति । दिवःस्थास्नूनगच्छतिस्थास्नुभ्यःपितरंपितुर्मातरंमातुःशरीरंशरीरे
णजायतइतिसंमितं । अथासंमितंस्थास्नुभ्योजायतेपितुर्मातुरंतरेवागर्भेवाबहिर्वेतिपौष्यायणश्रुतेः । स्थाव
राणिदिवःप्राप्तःस्थावरेभ्यश्चपूरुषं । पुरुषात्स्त्रियमापन्नस्ततोदेहंयथाक्रमं । देहेनजायतेजंतुरितिसामान्यतो
जनिः । विशेषजननंचापिप्रोच्यमानंनिबोधमे । स्थास्नुष्वथापिपुरुषेप्रमदायामथापिवा । गर्भेवाबहिरेवाथ
क्वचित्स्थानांतरेषुचेतिब्राह्मे ॥ [२९/२०]॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पा

दाचार्यविरचितेतृतीयाध्यायस्यप्रथमःपादः ॥ ३ ॥ १ ॥ ॥ ॥ ॥
॥ ॐ ॥ भक्तिरस्मिन्पादउच्यते । भक्त्यर्थंभगवन्महिमोक्तिः ॥ ॥ ॐसं[1]ध्येसृष्टिराहहिॐ ॥ ॥ नस्वप्नोपितं
विनाप्रतीयते । नतत्ररथानरथयोगानपन्थानोभवंत्यथरथान्रथयोगान्पथःसृजतइत्यादिश्रुतेः ॥[1]॥ ॐनिर्मा[2]
तारंचैकेपुत्रादयश्चॐ॥ ॥यएषुसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्मिमाणइतिच । एतस्माद्ध्येवपुत्रोजायतेएत
स्माद्भ्रातैतस्माद्भार्यायदैनंपुरुषमेषस्वप्नेनाभिहंतीतिगौपवनश्रुतिश्च॥[2] ॥केनसाधनेन॥ ॥ॐ[3]मायामात्रंतुका
र्त्स्न्येनानभिव्यक्तस्वरूपत्वात्ॐ ॥ ॥ अनादिमनोगतान्संस्कारान्स्वेच्छामात्रेणप्रदर्शयति । नान्येनसाधने
न । सम्यगनभिव्यक्तत्वात् । ब्रह्मांडेच मनोगतांश्चसंस्कारान्स्वेच्छयापरमेश्वरः । प्रदर्शयतिजीवायसस्वप्नइ
तिगीयते। यदन्यथात्वंजाग्रत्त्वंसाभ्रांतिस्तत्रतत्कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजंभवेदिति॥[3]॥ ॐ[4]सू
चकश्चहिश्रुतेराचक्षतेचतद्विदःॐ॥ ॥साधनांतराभावेपिभावाभावसूचकत्वेनेश्वरोदर्शयति। यदाकर्मसुका
म्येषुस्त्रियंस्वप्नेभिपश्यति । समृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननिदर्शनइत्यादिश्रुतेः । हिशब्दाद्दर्शनाच्च । यद्वा
पिब्राह्मणोब्रूयाद्देवतावृषभोपिवा। स्वप्नस्थमथवाराजातत्तथैवभविष्यतीत्याचक्षतेचस्वप्नविदोव्यासादयः॥[4]॥

॥ ॥ ॐपराभिध्यानात्तु तिरोहितंततोह्यस्यबंधविपर्ययौॐ ॥ ॥ बंधमोक्षप्रदत्वात्सएवस्वप्नतिरस्कर्ता । स्वप्ना
दिबुद्धिकर्ताचतिरस्कर्तासएवच । तदिच्छयायतोह्यस्यबंधमोक्षौप्रतिष्ठिताविति कौर्मे ॥२॥ ॥ॐदे[६]हयोगाद्वा
सोपिॐ॥ ॥देहयोगेनवासोजाग्रदपिततएव। सएवजागरितेस्थापयतिसस्वप्नेसप्रभुस्तुराषाट्सएकोबहुधाभ
वतीतिकौठरव्यश्रुतेः॥३॥ ॥ॐतदभावोनाडीषुतच्छ्रुतेरात्मनिहॐ॥ जाग्रत्स्वप्नाभावःसुप्तिःनाडीस्थेपरमा
त्मनि । आसुतदानाडीषुसृप्तोभवति । सतासोम्यतदासंपन्नोभवतीतिश्रुतेः॥४॥ ॥ॐअतःप्रबोधोस्मात्ॐ॥
यतस्तस्मिन्सुप्तिः । एषएवसुप्तंप्रबोधयत्येतस्माज्जीवउत्तिष्ठत्येषप्रमातैषपरमइतिकौंडिन्यश्रुतिः ॥ ५ ॥ ॥ ॐ
सएवचकर्मानुस्मृतिशब्दविधिभ्यःॐ ॥ ॥ नचकेषांचित्स्वप्नादिकर्तानतुसर्वेषामिति । एषह्येवसाधुकर्मकार
यतीतिकर्मण्यवधारणात्। प्रदर्शकस्तुसर्वेषास्वप्नादेरेकएवतु । परमःपुरुषोविष्णुस्ततोन्योनास्तिकश्चनेत्यनुसा
रिस्मृतेश्च । एषस्वप्नान्दर्शयत्येषप्रबोधयत्येषएवपरमआनंदइतिचश्रुतिः । आत्मानमेवलोकमुपासीतेतिच
विधिः ॥ ६ ॥ ॥ ॐमुग्धेर्धसंपत्तिःपरिशेषात्ॐ ॥ ॥ मोहावस्थायांपरमेश्वरेर्धप्राप्तिर्जीवस्य । हृदयस्थात्प
राज्जीवोदूरस्थोजाग्रदेष्यति । समीपस्थस्तथास्वप्नंस्वपित्यस्मिँल्लयंव्रजन्। यतएवंत्रयोवस्थामोहस्तुपरिशेषतः।

अर्धप्राप्तिरिरितिज्ञेयोदुःखमात्रप्रतिस्मृतेरितिवाराहे। सोपिततएवेतिसिद्धं। मूर्छाप्रबोधनंचैवयतएवप्रवर्तते। सईशःपरमोज्ञेयःपरमानंदलक्षणइतिकौर्मे ॥१०॥ स्थानापेक्षयापरमात्मनोभेदादनुग्राह्यानुग्राहकभावइत्यत आह ॥ ॥ॐनस्थानतोपिपरस्योभयलिंगंसर्वत्रहिॐ ॥ ॥स्थानापेक्षयापिपरमात्मनोनभिन्नंरूपं।सर्वेषुभूते ष्वेतमेवब्रह्मेत्याचक्षतइतिश्रुतिः। एकरूपःपरोविष्णुःसर्वत्रापिनसंशयः। ऐश्वर्याद्रूपमेकंचसूर्यवद्बहुधेयतइ तिमात्स्ये। प्रतिदृशमिवनैकधार्कमेकंसमधिगतोस्मिविधूतभेदमोहइतिचभागवते ॥११॥ ॐनभेदादितिचे न्नप्रत्येकमतद्वचनात्ॐ॥ ॥ कार्यकारणबद्धौताविष्येतेविश्वतैजसौ।प्राज्ञःकारणबद्धस्तुद्वौतुतुर्येनसिद्ध्यत इतिभेदवचनान्नेतिचेन्न। एषतआत्मांतर्याम्यमृतः। अयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंसर्वं। अयंवैहरयो ऽयंवैदशचसहस्राणिचबहूनिचानंतानिच तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूरित्यनु शासनमितिप्रत्येकमभेदवचनात्॥१२॥ॐअपिचैवमेकेॐ॥ ॥ एवमभेदेनैव।चशब्दादनंतरूपत्वंचैकेशाखि नःपठंति। अमात्रोनंतमात्रश्चद्वैतस्योपशमःशिवः। ॐकारोविदितोयेनसमुनिर्नेतरोजनइति। अभेदेपि भेदव्यपदेशःस्थानभेदादैश्वर्ययोगाच्चयुज्यते।ब्रह्मतर्केच बद्धोबंधादिसाक्षित्वाद्भिन्नोभिन्नेषुसंस्थितेः। नि

दोंषाद्यरूपोपिकथ्यतेपरमेश्वरइति ॥ [१३] ८ ॥ रूपवत्त्वादनित्यत्वमित्यतोवक्ति ॥ ॥ ॐ[१४] अरूपवदेवहितत्प्रधान
त्वात् ॐ ॥ ॥ प्रकृत्यादिप्रवर्तकत्वेनतदुक्तमत्वान्नैवरूपवद्ब्रह्म । हिशब्दादस्थूलमनण्वित्यादिश्रुतेश्च । भौति
कानिहिरूपाणिभूतेभ्योसौपरोयतः । अरूपवानतःप्रोक्तःकतदव्यक्ततःपरइतिमात्स्ये ॥ [१४] ॥ ॐ[१५] प्रकाशवच्चा
वैयर्थ्यं ॐ ॥ ॥ यदापश्यःपश्यतेरुक्मवर्णं । श्यामाच्छबलंप्रपद्ये । सुवर्णज्योतिरित्यादिश्रुतीनांचनवैयर्थ्यं । वि
लक्षणरूपत्वात् । यथाचक्षुरादिप्रकाशेविद्यमानेपिवैलक्षण्यादप्रकाशादिव्यवहारः ॥ [१५] ॥ ॐ[१६] आहचतन्मात्रं ॐ
॥ ॥ वैलक्षण्यंचोच्यतेरूपस्य । विज्ञानानंदमात्रत्वं । ऐकात्म्यप्रत्ययसारमिति । आनंदमात्रमजरंपुराणमेकंसं
तंबहुधादृश्यमानं । तमात्मस्थंयेनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषामितिचतुर्वेदशिखायां ॥ [१६] ॥ ॐ[१७] दर्शय
तिचाथोअपिस्मर्यते ॐ ॥ ॥ दर्शयतिचानंदरूपत्वं । तद्विज्ञानेनपरिपश्यंतिधीराआनंदरूपममृतंयद्विभाती
ति । शुद्धस्फटिकसंकाशंवासुदेवंनिरंजनं । चिंतयीतयतिर्नान्यंज्ञानरूपादृतेहरेरितिचमात्स्ये ॥ [१७] ९ ॥ ॥
ॐ[१८] अतएवचोपमासूर्यकादिवत् ॐ ॥ ॥ यस्मादेवंपरमेश्वररूपाणांमिथोनकश्चिद्भेदःअतःसादृश्याज्जीवस्या
पितथास्यादिति । तस्यप्रतिबिंबत्वमुक्ताचशब्देनभेदंदर्शयति । रूपंरूपंप्रतिरूपोबभूव । बहवःसूर्यकायद्व

त्सूर्यस्यसदृशाजले । एवमेवात्मकालोकेपरात्मसदृशामताइत्यादि । अतएवभिन्नत्वतदधीनत्वतत्सादृश्यै
रेवसूर्यकाद्युपमा।नोपाध्यधीनत्वादित्यादिना॥[१८]॥नित्यसिद्धत्वात्सादृश्यस्यनित्यानंदज्ञानादेर्नभक्तिज्ञाना
दिनाप्रयोजनमित्यतोब्रवीति ॥ ॥ ॐअंबुवदग्रहणात्तुनतथात्वंॐ ॥ ॥ अंबुवत्स्नेहेन । ग्रहणंज्ञानं । भ
क्तिविनानतत्सादृश्यंसम्यगभिव्यज्यते । यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वामितिहिश्रुतिः।
महत्त्वबुद्धिर्भक्तिस्तुस्नेहपूर्वाभिधीयते । तयैवव्यज्यतेसम्यग्जीवरूपंसुखादिकमितिपाद्मे ॥ [१९] ॥ ॥ ॐवृ
द्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवंॐ ॥ ॥ तस्यचभक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वंविद्यते । ब्रह्मादीना
मुत्तमानांसर्वेषांभाक्तत्वेंतर्भावात् । एवंभक्त्यादिविशेषांगीकारादेवेश्वरस्यब्रह्मादीनन्यान्प्रतिचसामंजस्यंभ
वति । साधनस्योत्तमत्वेनसाध्यंचोत्तममाप्नुयुः । ब्रह्मादयःक्रमेणैवयथानंदश्रुतौश्रुताइतिब्राह्मे ॥[२०]॥ कुतः।
॥ ॐदर्शनाच्चॐ ॥ ॥ अथातआनंदस्यमीमांसाभवतीत्यारभ्यब्रह्मपर्यंतेषुसुखेविशेषदर्शनात् । चशब्दात्स्मृ
तिः । यथाभक्तिविशेषोत्रदृश्यतेपुरुषोत्तमे । तथामुक्तिविशेषोपिज्ञानिनांलिंगभेदनइति ॥ [२१] ॥ सृष्टिसंहार
कर्तृत्वमेवास्यनपालकत्वंस्वतःसिद्धेरित्यतआह ॥ ॥ ॐप्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूयःॐ ॥

॥ उक्तंसृष्टिसंहारकर्तृत्वमात्रंप्रतिषिध्यततोधिकंब्रवीति । नैतावदेनापरोअन्यदस्त्युक्षासद्यावापृथिवीबिभर्तीति । चशब्दात्स्मृतिश्च । सृष्टिंचपालनंचैवसंहारंनियमंतथा । एकएवकरोतीशःसर्वस्यजगतोहरिरितिब्रह्मांडे ॥[२२ १३]॥ परमात्मापरोक्ष्यंचतत्प्रसादादेव । नजीवशक्त्येतिवक्तुमुच्यते ॥ ॥ ॐ[२३]तदव्यक्तमाहहिॐ ॥ ॥ अव्यक्तमेवतद्ब्रह्मस्वतः । अरूपमक्षरंब्रह्मसदाऽव्यक्तंचनिष्कलं । यज्ज्ञात्वामुच्यतेजंतुरानंदश्चाक्षयोभवेदिति कौंठरव्यश्रुतिः ॥[२३]॥ ॐ[२४]अपिसंराधनेप्रत्यक्षानुमानाभ्यांॐ ॥ ॥ आराधनेप्यव्यक्तमेव । ज्ञानिनांप्रत्यक्षेणेतरेषामतिसूक्ष्मत्वलिंगानुमानेन । नतमाराधयित्वापिकश्चिद्व्यक्तीकरिष्यति । नित्याव्यक्तोयतोदेवःपरमात्मा सनातनइतिब्रह्मवैवर्ते ।[२४]। नित्याव्यक्तरूपेणतथैवतिष्ठति । व्यक्तंकिंचिद्रूपंगृहीत्वादृश्यते । यथाग्न्यादयस्तन्मात्रारूपेणादृश्याअपिस्थूलरूपेणदृश्यंतेएवमितिचेन्न॥ ॥ॐ[२५]प्रकाशवच्चावैशेष्यंॐ॥ ॥अग्न्यादिवत्स्थूलसूक्ष्मत्वविशेषाभावात् । नासौसूक्ष्मोनस्थूलःपरएवसभवतितस्मादाहुःपरमइतीतिमांडव्यश्रुतेः । स्थूलसूक्ष्मविशेषोत्रनकचित्परमेश्वरे । सर्वत्रैकप्रकारोसौसर्वरूपेष्वजोयतइतिगारुडे । अव्यक्तव्यक्तभावौचनक्वचित्परमेश्वरे । सर्वत्राव्यक्तरूपोयंयतएवजनार्दनइतिकौर्मे॥[२५]॥तर्हिकिंयत्नेनेत्यतआह ॥ ॥ ॐ[२६]प्रकाशश्चकर्मण्यभ्या

सात्ॐ ॥ ॥ विषयभूतेतस्मिन्नेवश्रवणाद्यभ्यासात्प्रकाशश्चभवति । आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनि
दिध्यासितव्यइतिश्रुतेः॥ [२६] ॥ नित्याव्यक्तस्यकथंप्रकाशइत्यतउच्यते ॥ ॥ ॐ[२७]अतोनंतेनतथाहिलिंगंॐ ॥ ॥
उभयत्रप्रमाणभावात्तत्प्रसादादेवप्रकाशोभवति । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांतेविश्वमायानिवृ
त्तिरितिलिंगात् । युज्यतेचतस्यानंतशक्तित्वात् । नित्याव्यक्तोपिभगवानीक्ष्यतेनिजशक्तितः । तमृतेपरमा
त्मानंकःपश्येतामितंप्रभुमितिनारायणाध्यात्मे ॥[२७]१४॥ स्वरूपेणानंदादिनाकथमानंदित्वादिरिति । अतउच्य
ते ॥ ॥ ॐ[२८]उभयव्यपदेशात्त्वहिकुंडलवत्ॐ ॥ ॥ आनंदंब्रह्मणोविद्वान् अथैषएवपरमआनंदइत्युभयव्यपदे
शादहिकुंडलवदेवयुज्यते । यथाहिःकुंडलीकुंडलंच । तुशब्दात्केवलश्रुतिगम्यत्वंदर्शयति ॥ [२८] ॥ ॐ[२९]प्रकाशा
श्रयवद्वातेजस्त्वात्ॐ ॥ ॥ यथाऽऽदित्यस्यप्रकाशत्वंप्रकाशित्वंचएवंवादृष्टांतः । तेजोरूपत्वाद्ब्रह्मणः॥ [२९] ॥ ॐ
[३०]पूर्ववद्वाॐ ॥ ॥ यथैकएवकालःपूर्वइत्यवच्छेदकोऽवच्छेद्यश्चभवति । अतिसूक्ष्मत्वापेक्षयैषदृष्टांतः । स्थूल
मतीनांचप्रदर्शनार्थमहिकुंडलदृष्टांतः । प्रकाशवत्कालवद्वायथांगेशयनादिकं । ब्रह्मणश्चैवमुक्तानामानंदो
भिन्नएवत्वितिनारायणाध्यात्मे । आनंदेनत्वभिन्नेनव्यवहारःप्रकाशवत् । कालवद्वायथाकालःस्वावच्छेदक

तांव्रजेदितिपाद्मे ॥[३०]॥ ॐ[३१]प्रतिषेधाच्चॐ ॥ ॥ एकमेवाद्वितीयं ।नेहनानास्तिकिंचनेतिभेदस्य ॥ [३१/१५] ॥ ॥ ॐ [३२]परमतःसेतून्मानसंबंधभेदव्यपदेशेभ्यःॐ ॥ ॥ नचानंदादित्वाल्लोकानंदादिवत् । एषसेतुर्विधृतिः यएषआनंदःपरस्य एषनित्योमहिमाब्राह्मणस्येतिसेतुत्वंह्युच्यते । यतोवाचोनिवर्तंतइत्युन्मानत्वं । एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिसंबंधः । अन्यज्ज्ञानंतुजीवानामन्यज्ज्ञानंपरस्यच । नित्यानंदाव्ययंपूर्णंपरज्ञानंविधीयतइतिभेदः। अतोऽलौकिकत्वात्परमेवब्रह्मानंदादिकं ॥[३२]॥ ॐ[३३]दर्शनात्ॐ ॥ ॥ दर्शनादेवचान्यानंदादीनां । अदृष्टमव्यवहार्यमव्यपदेश्यंसुखंज्ञानमोजोबलमितिब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षतेतस्माद्ब्रह्मेत्याचक्षतइतिकौंडिन्यश्रुतिः॥[३३]॥ अप्रसिद्धस्यकथमानंदइत्यादिव्यपदेशइत्यतोवक्ति ॥ ॥ ॐ[३४]बुद्ध्यर्थःपादवत्ॐ ॥ जीवेश्वरसंबंधज्ञापनार्थमप्रसिद्धोपिपादोयथापादशब्देनव्यपदिश्यतेपादोस्यविश्वाभूतानीति तथा । अलौकिकोपिज्ञानादिस्तच्छब्दैरेवभण्यते । ज्ञापनार्थायलोकस्ययथाराजेवदेवराडितिपाद्मे ॥ [३४/१६] ॥ परानंदमात्रत्वेकथंब्रह्माद्यानंदादीनांविशेषइत्यतउच्यते ॥ ॥ ॐ[३५]स्थानविशेषात्प्रकाशादिवत्ॐ ॥ ॥ यथादित्यस्यदर्पणादिस्थानविशेषात्प्रतिबिंबेविशेषः । एवमानंदादेरपि । ब्रह्मादिगुणवैशेष्यादानंदादिःपरस्यच । प्रति

बिंबत्वमायातिमध्योच्चादिविशेषतइतिवाराहे ॥[३५]॥ ॐ[३६]उपपत्तेश्चॐ ॥ ॥ ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादी
नामनादितः । ब्रह्मादीनांसूपपन्नाह्यानंदादेर्विचित्रतेतिपाद्मे ॥[३६]१७॥ ध्यानकालेयच्चित्तेप्रदृश्यतेतदेवब्रह्मरूपं ।
अतःकथमव्यक्ततेत्यतआह ॥ ॥ ॐ[३७]तथान्यत्प्रतिषेधात्ॐ ॥ ॥ यथाजीवानंदादेरन्यद्ब्रह्म । तथोपासाकृता
दपि । यन्मनसानमनुतेयेनाहुर्मनोमतं । तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासतइतिप्रतिषेधात् । पश्यंतिपरमं
ब्रह्मचित्तेयत्प्रतिबिंबितं । ब्रह्मैवप्रतिबिंबेयदतस्तेषांफलप्रदं । तदुपासनंचभवतिप्रतिमोपासनंयथा । दृश्यते
त्वापरोक्ष्येणज्ञानेनैवपरंपदं । उपासनात्वापरोक्ष्यंगमयेत्तत्प्रसादतइतिब्रह्मतर्के ॥[३७]१८॥ देशकालांतरेऽन्यतो
पिसृष्ट्यादिर्युक्तेत्यतोब्रूते ॥ ॥ ॐ[३८]अनेनसर्वगतत्वमायामयशब्दादिभ्यःॐ ॥ ॥ सर्वदेशकालवस्तुष्वनेनैवसृ
ष्ट्यादिकंप्रवर्तते । एषसर्वएषसर्वगतएषसर्वेश्वरएषोचिंत्यएषपरमइतिभाल्लवेयश्रुतिः । सर्वत्रसर्वमेतस्मात्सर्व
दासर्ववस्तुषु । स्वरूपभूतयानित्यशक्त्यामायाख्ययायतः । अतोमायामयंविष्णुंप्रवदंतिसनातनमितिचतु
र्वेदशिखायां । आदिशब्दादन्यत्रप्रमाणाभावाच्च ॥[३८]१९॥ कर्मापेक्षत्वात्फलदानस्यतदेवददातीतिनवाच्यं । कु
तः ॥ ॥ ॐ[३९]फलमतउपपत्तेःॐ ॥ ॥ अतएवेश्वरात्फलंभवति । नह्यचेतनस्यस्वतःप्रवृत्तिर्युज्यते ॥[३९]॥ ॐ[४०]श्रु

तत्वाच्चॐ ॥ ॥ विज्ञानमानंदंब्रह्मरातिर्दातुःपरायणमिति ॥[४०]॥ ॐ[४१]धर्मंजैमिनिरतएवॐ ॥ ॥ यतःफलं तदेवकर्मईश्वराद्भवति । एषह्येवसाधुकर्मकारयतीतिश्रुतेरितिजैमिनिः ॥[४१]॥ ॐपूर्वं[४२]तुबादरायणोहेतुव्यपदेशात्ॐ ॥ ॥ परस्यकर्मणश्चोभयोःफलकारणत्वेपिनकर्मपरप्रवर्तकं । परएवकर्मणःप्रवर्तकः । पुण्येन पुण्यंलोकंनयतिपापेनपापमितिहेतुव्यपदेशात् । द्रव्यंकर्मचकालश्चेतिच ॥[४२/२०]॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्यद्वितीयःपादः ॥ ३ ॥ २ ॥ ॥

॥ ॐ ॥ उपासनास्मिन्पादउच्यते । सर्वपरिज्ञानंप्रथमतउच्यते॥ ॥ॐसर्ववेदांतप्रत्ययंचोदनाद्यविशेषात्ॐ॥ अंतोनिर्णयः । उभयोरपिदृष्टोंतइतिवचनात् । सर्ववेदविनिर्णयोत्पाद्यज्ञानंब्रह्म । आत्मेत्येवोपासीतेत्यादिविधीनांतदुक्तयुक्तीनांचाविशिष्टत्वात् ॥[१]॥ ॐभेदा[२]न्नेतिचेदेकस्यामपिॐ॥ ॥विज्ञानमानंदंब्रह्म । सत्यंज्ञानमनंतंब्रह्मेत्यादिप्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाःसर्वशाखाइतिचेन्न। एकस्यामपिशाखायांआत्मेत्येवोपासीतकंब्रह्मखंब्रह्मेत्यादिभेददर्शनात् ॥[२]॥ॐस्वा[३]ध्यायस्यतथात्वेनहिसमाचारेधिकाराच्चॐ॥ ॥स्वाध्यायोध्येतव्यइतिसामान्यविधेः । हिशब्दाद्वेदःकृत्स्नोधिगंतव्यःसरहस्योद्विजन्मनेतिस्मृतेः । सर्ववेदोक्तमार्गेणकर्म

कुर्वीतनित्यशः। आनंदोहिफलंयस्माच्छाखाभेदोह्यशक्तिजः।सर्वकर्मकृतौयस्मादशक्ताःसर्वजंतवः।शाखा
भेदंकर्मभेदंव्यासस्तस्मादचीक्लृपदितिसमाचारेसर्वेषामधिकाराच्च ॥[३]॥ ॐसैलिलवच्चतन्नियमःॐ॥ ॥यथा
सर्वंसलिलंसमुद्रंगच्छतिएवंसर्वाणिवचनानिब्रह्मज्ञानार्थानीतिनियमः। आग्नेयेच। यथानदीनांसलिलंशक्ये
सागरगंभवेत्। एवंवाक्यानिसर्वाणिपुंशक्त्याब्रह्मवित्तयइति ॥[४]॥ ॐदर्शयतिचॐ॥ ॥सर्वैश्चवेदैःपरमोहि
देवोजिज्ञास्योसौनाल्पवेदैःप्रसिध्येत्। तस्मादेनंसर्ववेदानधीत्यविचार्यचज्ञातुमिच्छेन्मुमुक्षुरितिचतुर्वेदशि
खायां। सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान्। सपंचरात्रान्विज्ञायविष्णुर्ज्ञेयोनचान्यथेतिब्रह्मतर्के
॥१॥ सर्ववेदैर्ज्ञेयोनोपास्योशक्यत्वादित्यतआह॥ ॥ॐउपसंहारोर्थाभेदाद्विधिशेषवत्समानेचॐ॥ ॥स
र्ववेदोक्तान्गुणान्दोषाभावांश्चोपसंहृत्यैवपरमात्मोपास्यः। उपास्यएकःपरतःपरोयोवेदैश्चसर्वैःसहचेतिहासैः।
सपंचरात्रैःसपुराणैश्चदेवःसर्वैर्गुणैस्तत्रतत्रप्रतीतैरितिभाल्लवेयश्रुतिः। आग्नेयेच। विधिशेषाणिकर्माणिसर्ववे
दोदितान्यपि। यथाकार्याणिसर्वैश्चसर्वाण्येवाविशेषतः।एवंसर्वगुणान्सर्वदोषाभावांश्चयत्नतः। योजयित्वैवभ
गवानुपास्योनान्यथाक्वचिदिति। समानविषयेचोपसंहारः। नतुसोऽरोदीदित्यादीनां। गुणैरेवसतूपास्योनैव

दोषैःकथंचन । गुणैरपिनतूपास्योयेपूर्णत्वविरोधिनइतिबृहत्तंत्रे ॥ [६] ॥ ॐअन्यथात्वंचशब्दादितिचेन्नाविशे षात्ॐ ॥ ॥ आत्मेत्येवोपासीतेतिशब्दादुपसंहारस्यान्यथात्वमितिचेन्न। एतेगुणानोपास्याइतिविशेषवचना भावात्। सर्वैर्गुणैरेकएवेशितासावुपासितव्योनतुदोषैःकदाचिदितिविशेषवचनाच्च । आत्मेत्येवेत्यवधारणम नात्मत्वनिवृत्त्यर्थं ॥ [७] ॥ ॐनर्वाप्रकरणभेदात्परोवरीयस्त्वादिवत्ॐ ॥ ॥ प्रकरणभेदान्नवोपसंहारःकार्यः । प रोवरीयस्त्वादिषुतावदेवह्युक्तं ॥ [८] ॥ ॐसंज्ञातश्चेत्तदुक्तमस्तितुतदपिॐ ॥ ॥ सर्वविद्याउक्त्वासोहंनामविदेवा स्मिनात्मविदितिवचनात्सर्वस्यब्रह्मनामत्वात्तदुपसंहारःकार्यः । नामत्वात्सर्वविद्यानांगुणानामुपसंहृतिः । कार्यैवब्रह्मणिपरेनात्रकार्याविचारणेतिब्रह्मतर्केइतिचेत्सत्यं।उक्तोह्युपसंहारः । तत्प्रमाणमप्यस्त्येव । नामवाए ताब्रह्मणःसर्वविद्यास्तस्मादेकःसर्वगुणैर्विचिंत्यइतिकौंडिन्यश्रुतौ ॥ [९/२] ॥ ॥ ॐप्राप्तेश्चसमंजसंॐ ॥ ॥ युज्य तेचोपसंहारोनुपसंहारश्चयोग्यताविशेषात्।गुणैस्सर्वैरुपास्योसौब्रह्मणापरमेश्वरः। अन्यैर्यथाक्रमंचैवमानुषैः कैश्चिद्देवत्वितिभविष्यत्पर्वणि ॥ [१०/३] ॥ ॥ ॐसर्वाभेदादन्यत्रेमेॐ ॥ ॥ सर्वगुणयुक्तत्वेनोपासनादन्यत्रैवफलेब्र ह्मादयोभवंति।संपूर्णोपासनाद्ब्रह्मासंपूर्णानंदभाग्भवेत्। इतरेतुयथायोगंसम्यङ्मुक्तौभवंतिहीतिपाद्मे ॥ [११/४] ॥

सर्वेषांमुमुक्षूणांकियन्नियमेनोपास्यमित्यतआह ॥ ॥ ॐआनंदादयःप्रधानस्यॐ ॥ ॥ प्रधानफलस्यमोक्ष
स्यार्थेआनंदोज्ञानंसदात्मेत्युपास्यएव । सच्चिदानंदआत्मेतिब्रह्मोपासाविनिश्चिता । सर्वेषांचमुमुक्षूणांफलसा
म्यादपेक्षितेतिब्रह्मतर्के ॥ ५ ॥ ॥ ॐप्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहिभेदेॐ ॥ ॥ फलभेदार्थमुपचयाप
चययोर्भावान्नसर्वेषांप्रियशिरस्त्वादिगुणोपासाप्राप्तिः । नैवसर्वगुणाःसर्वैरुपास्यामुक्तिभेदतः । विरिंचस्यैवय
न्मुक्तावानंदस्यसुपूर्णतेतिवाराहे ॥ ६ ॥ ॥ ॐइतरेत्वर्थसामान्यात्ॐ ॥ ॥ इतरेगुणाःफलसाम्यापेक्षयोप
संहर्तव्या ॥ ७ ॥ उपसंहारानुपसंहारप्रमाणमाह॥ ॥ॐआध्यानायप्रयोजनाभावात्ॐ॥ ॥आध्यानार्थंहिस
र्वेगुणाउच्यंतेप्रयोजनांतराभावात्।ज्ञानार्थमथध्यानार्थंगुणानांसमुदीरणा । ज्ञातव्याश्चैवध्यातव्यागुणाःसर्वे
ष्यतोहरेः। नान्यत्प्रयोजनंज्ञानाद्ध्यानात्कर्मकृतेरपि । श्रवणाच्चाथपाठाद्वाविद्याभिःकिंचिदिष्यतइतिपरमसं
हितायां।गुणाःसर्वेपिवेत्तव्याध्यातव्याश्चनसंशयः। नान्यत्प्रयोजनंमुख्यंगुणानांकथनेभवेत्। ज्ञानध्यानसमा
योगाद्गुणानांसर्वशःफलं। मुख्यंभवेन्नचान्येनफलंमुख्यंकचिद्भवेदितिबृहत्तंत्रे ॥ ॥ ॐआत्मशब्दाच्चॐ ॥ ॥
आत्मेत्येवोपासीतेत्यनुपसंहारेप्रमाणं ॥ ८ ॥ ॥ ॐआत्मगृहीतिरितरवदुत्तरात्ॐ ॥ ॥ नचानंदादयःप्रधान

स्येत्युक्तिविरोधः।यतःसत्यंज्ञानमनंतंब्रह्म विज्ञानमानंदंब्रह्मेतिवदेवात्मशब्दगृहीतिः।अत्रह्येतेसर्वएकीभवंती
त्युत्तरात्। आनंदानुभवत्वाच्चनिर्दोषत्वाच्चभण्यते। नित्यत्वाच्चतथात्मेतिवेदवादिभिरीश्वरइतिबृहत्तंत्रे॥ [१७] ९॥
॥ ॥ ॐ [१८] अन्वयादितिचेत्स्यादवधारणात् ॐ॥ ॥सर्वगुणानामन्वयआत्मशब्देभवति। आप्तव्याप्तेरात्मशब्दः
परमस्यप्रयुज्यतइतिवचनादितिचेत्सत्यं। स्याच्चैवं आत्मेत्येवेत्यवधारणात्। अन्यथासर्वोपसंहारवचनविरो
धात्॥ [१८] १०॥ ॥ ॐ [१९] कार्याख्यानादपूर्वं ॐ॥ ॥ अलौकिकास्तस्यगुणाह्युपास्याअलौकिकंमुक्तिकार्यंयतो
स्येतिकार्याख्यानादन्यत्राद्दष्टाएवगुणाउपास्याः ॥ [१९] ११॥ ॥ ॐ [२०] समानएवंचाभेदात् ॐ॥ ॥ अपूर्वत्वेपिस
मानानामेवोपसंहारः। नतुत्रिविक्रमत्वादीनांकादाचित्कानांपृथक्त्वेन। नित्यविक्रांत्यादिष्वंतर्भावात्॥ [२०] ॥
॥ ॥ ॐ [२१] संबंधादेवमन्यत्रापि ॐ॥ ॥परमात्मसंबंधित्वेननित्यत्वात्त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वंयुज्यते।
गुणास्त्रैविक्रमाद्यास्तुसंहर्तव्यानसंशयः। विरिंचस्यैवनान्येषांसहिसर्वगुणाधिकइतिबृहत्तंत्रे ॥ [२१] १२॥ ॥ ॐ
[२२] नवाविशेषात् ॐ॥ ॥ नवात्मशब्देनसर्वगुणगृहीतिः। अधिकारिविशेषात्॥ [२२] ॥ ॐ [२३] दर्शयतिच ॐ॥ ॥
सर्वान्गुणानात्मशब्दोब्रवीतिब्रह्मादीनामितरेषांनचैवेतिभाल्लवेयश्रुतिः ॥ [२३] १३॥ ॥ ॐ [२४] संभृतिद्युव्याप्त्यपिचा

तःॐ ॥ ॥संभूतिद्युव्याप्तीअपिदेवादीनामुपसंहर्तव्येनान्येषां । अतएवयोग्यताविशेषात्। देवादीनामुपास्या स्तुभृतिव्याप्त्यादयोगुणाः । आनंदाद्यास्तुसर्वेषामन्यथानर्थकृद्भवेदितिब्रह्मतर्के ॥ [२४][१४] ॥ यस्यांविद्यायांमहागु णाउच्यंतेसोत्तमानां । इतराऽन्येषामितिचेन्न ॥ ॥ ॐ[२५]पुरुषविद्यायामपिचेतरेषामनाम्नानात्ॐ ॥ ॥ पुरुषसू क्तोक्तविद्यायामपिकेषांचिद्गुणानामनाम्नानात् । सर्वतःपौरुषेसूक्तेगुणाविष्णोरुदीरिताः । तत्रापिनैवसर्वेपि तस्मात्कार्योपसंहृतिरितिब्रह्मतर्के ॥[२५][१५]॥ ॥ ॐ[२६]वेधाद्यर्थभेदात्ॐ॥ ॥भिंधिविध्यशृणीहीतिफलभेदेनसर्वशः। यत्यादीनांतेष्वयोगान्नाधिकारैकताभवेत् । अयोग्योपासनादीयुरनर्थंचार्थनाशनमितिबृहत्तंत्रे ॥[२६][१६]॥ मुक्त स्योपासनाकर्तव्यानवेति । अतोब्रवीति॥ ॥ॐ[२७]हानौतूपायनशब्दशेषत्वात्कुशाछंदस्तुत्युपगानवत्तदुक्तंॐ ॥ नियतस्वाध्यायानंतरंस्वेच्छयाकुशाग्रहणस्तुत्युपगानवदेवमोक्षउपासनादि । ब्रह्मविदाप्नोतिपरमितिमोक्ष वाक्यशेषत्वादितरेषां । तच्चोक्तं । एतत्सामगायन्नास्तइत्यादि । ब्रह्मतर्केच । मुक्ताअपिहिकुर्वंतिस्वेच्छयो पासनंहरेः । नियमानंतरंविप्राःकुशाद्यैरप्यधीयतइति । कृष्णोमुक्तैरिज्यतेवीतमोहैरितिचभारते ॥[२७]॥ ॐ सांपराये[२८]तर्तव्याभावात्तथाह्यन्येॐ ॥ ॥ स्वेच्छयैवेत्यंगीकर्तव्यं । मुक्तस्यतीर्णत्वात् । तीर्णोहितदासर्वाञ्छो

कान्हृदयस्यभवतीतिह्यन्येपठंति। वायुप्रोक्तेच। स्थितप्रज्ञत्वमासाद्ययेज्ञानेनपरमात्मनः। ब्रह्मलोकंगताःसर्वेब्र ह्मणाचपरंगताः। तीर्णतर्तव्यभागाश्चस्वेच्छयोपासतेपरमिति ॥[२८]१७॥ कर्मापिकुर्वंतिनवेत्यतआह ॥ ॥ ॐछं[२९]दतउभयाविरोधात्ॐ ॥ ॥ स्वेच्छयाकुर्वंतिनवा। बंधप्रत्यवाययोरभावात्॥ [२९] ॥ ॐ[३०]गतेरर्थवत्त्वमुभयथान्यथाहिविरोधःॐ॥ ॥ बंधप्रत्यवायाभावेहिमोक्षस्यार्थवत्त्वं। अन्यथामोक्षत्वमेवनस्यात्। कदाचित्कर्मकुर्वंति कदाचिन्नैवकुर्वते। नित्यज्ञानस्वरूपत्वान्नित्यंध्यायंतिकेशवं। तीर्णतर्तव्यभागायेप्राप्तानंदाःपरात्मनः। प्रत्यवायस्यबंधस्याप्यभावात्स्वेच्छयाभवेदितिब्रह्मांडे ॥ [३०] ॥ ॐ[३१]उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्ॐ ॥ ॥ उपपन्नश्चैवंभावः। प्राप्तत्वात्तल्लक्षणस्यफलस्य। यथालोकेविध्यर्थत्वेनविष्णुक्रमणादिकंकृत्वासमाप्तकर्मेच्छयाकरोतिनकरोतिच ॥[३१]१८॥ ॥ ॐ[३२]अनियमःसर्वेषामविरोधाच्छब्दानुमानाभ्यांॐ ॥ ॥ प्राप्तज्ञानानामपिकेषांचिन्मुक्तिप्राप्तिःकेषांचिन्न। यथोपसंहारनियमइतिनमंतव्यं। सर्वैर्गुणाब्रह्मणैवह्युपास्यानान्यैर्देवैःकिमुसर्वैर्मनुष्यैरित्युपसंहारेविरोधादन्यत्राविरोधात्। नकश्चिद्ब्रह्मवित्सृतिमनुभवतिमुक्तोह्येवभवतितस्मादाहुःसृतिहेतीतिकौंडिन्यश्रुतेश्च। यथाकेषांचिन्मोक्षएवमन्येषामित्यनुमानाच्च ॥ [३२]१९ ॥ ॥ ॐ [३३]यावदधिकारमव

स्थितिराधिकारिकाणां ॐ ॥ ॥ यथायथाधिकारोविशिष्यतेएवंमुक्तावानंदोविशिष्यते । मनुष्येभ्योगंधर्वा
णांगंधर्वेभ्यऋषीणामृषिभ्योदेवानांदेवेभ्यइंद्रस्यइंद्राद्रुद्रस्यरुद्राद्ब्रह्मणएषह्येवशतानंदइतिचतुर्वेदशिखायां ।
अध्यात्मेच । ज्ञानंचोपासनंचैवमुक्तावानंदएवच । यथाधिकारंदेवानांभवत्येवोत्तरोत्तरमिति ॥ [३३] ॥ ॐ
[३४] अक्षरधियांत्वविरोधःसामान्यतद्भावाभ्यामौपसदवत्तदुक्तं ॐ ॥ ॥ नचासमत्वेनविरोधोभवति । ब्रह्मधीत्वा
द्दोषाभावसाम्यादुत्तमेभ्योन्येषांभावाच्च । औपसदवच्छिष्यवत् । उक्तंचतुरश्रुतौ । नानाविधाजीवसंघाविमु
क्तौनचैवतेषांब्रह्मधियांविरोधः । दोषाभावाद्गुरुशिष्यादिभावाल्लोकेपिनासौकिमुतेषांविमुक्तेरिति ॥ [३४/२०] ॥
॥ ॥ ॐ [३५] इयदामननात् ॐ ॥ ॥ नामाद्यारभ्यप्राणांतमुत्तरोत्तरमुत्तमत्वमुक्तं । नप्राणात्किंचिद्भूयउक्तं । त
थापिपूर्ववत्स्यादितिनवाच्यं। प्राणोवावसर्वेभ्योभूयान्नहिप्राणाद्भूयान्प्राणोह्येवभूयांस्तस्माद्भूयान्नामेतिकौंठ
रव्यश्रुतेः॥ [३५] ॥ ॐ [३६] अंतराभूतग्रामवदितिचेत्तदुक्तंॐ ॥ ॥ यथाभूतग्रामएकस्मादेकउत्तमोस्त्येव। एवंप्राणा
दपिपरमात्मानमंतराविद्यतइतिचेन्न। प्राणादुत्तमाभावेप्रमाणमुक्तं अन्यत्रोत्तमाभावेनप्रमाणं।दृश्यतेचान्य
त्रोत्तमत्वं ॥ [३६] ॥ ॐ [३७] अन्यथाभेदानुपपत्तिरितिचेन्नोपदेशवत् ॐ ॥ ॥ प्राणस्यसर्वोत्तमत्वेपरमात्मनाभेदानुप

पत्तिरितिचेन्न। श्रुत्युपदिष्टवदुपपत्तेः। अन्येभ्यःप्राणस्योत्तमत्वंतस्मात्परमात्मनोह्युपदिष्टं॥ [३७] २१ ॥ नेतिचेन्न
॥ ॥ ॐ [३८] व्यतिहारोविशिंषंतिहीतरवत् ॐ ॥ ॥ उक्तंप्राणात्परमात्मनउत्तमत्वंपूर्वोक्ताध्याहारेण। एषतुवाअ
तिवदतीतिविशिंषंतिहि। यथेतरेषुविशेषणं। उत्तमत्वंहिदेवानांमुक्तावपिहिमानवात्। तेभ्यःप्राणस्यतस्माच्च
नित्यमुक्तस्यवैहरेरितिबृहत्तंत्रे॥ [३८] २२॥ कृतिर्निष्ठाविज्ञानमित्यादीनांभेदाद्दहवउत्तमाइतिचेन्न॥ ॥ ॐसैवंहिस [३९]
त्यादयः ॐ ॥ ॥ सत्यादिगुणास्तस्याएवपरदेवतायाःस्वरूपभूताः। ब्रह्मतर्केच। नामादिप्राणपर्यंताद्योहिस
त्यादिरूपवान्। तस्मैनमोभगवतेविष्णवेसर्वजिष्णवइति। सत्याद्याअहमात्मांतायद्गुणाःसमुदीरिताः।तस्मै
नमोभगवतेयस्मादेवविमुच्यतइतिचाध्यात्मे॥ [३९] २३॥ प्रकृतेरपिजन्मादेःसंसारप्राप्तेःकिमितिनामादिष्वपाठइ
त्यत्रोच्यते॥ ॥ॐ [४०] कांमादितरत्रतत्रचायतनादिभ्यः ॐ॥ ॥स्वेच्छयैवमूलस्थानेस्थिताऽन्यत्रावतारान्करो
तीश्वरेच्छानुसारेण। सर्वायतनासर्वकालासर्वेच्छासर्वज्ञानबद्धाबंधिकासैषाप्रकृतिरविकृतिरितिवत्सश्रुतेः।
नामादयस्तुबद्धत्वान्मोचकत्वात्परोपिच।उभयोरप्यभावेनयथाव्यक्तंनतूदितं। श्रुतौतथाजीवपरावुच्येतेकिं
चनेतरत्।नोच्यतेचतदातत्त्वद्वयंवैसमुदाहृतमितिब्रह्मतर्के॥ [४०] ॥ ॐ [४१] आदरादलोपःॐ॥ ॥अबद्धत्वेपिभक्ति

विशेषादेवोपासनाद्यलोपस्तस्याभवति । यथाश्रीर्नित्यमुक्तापिप्राप्तकामापिसर्वदा । उपास्तेनित्यशोविष्णुमे
वंभक्तोहरेर्भवेदितिबृहत्तंत्रे ॥[४१]॥ ॐ [४२]उपस्थितेस्तद्वचनात् ॐ ॥ ॥ अनादिकालेभगवत्संबंधित्वाद्युज्यतेच
नित्यमुक्तत्वंतस्याः । द्वावेतावनादिनित्यावनादियुक्तौनित्यमुक्तावनादिकृतौनित्यकृतौयोयंपरमोयाचप्रकृ
तीरमतेह्यस्यांपरमोरमतेह्यस्मिन्प्रकृतिःस्वस्मिन्हिरमतेपरमोनस्वस्मिन्प्रकृतिरतएनमाहुःपरमइतीतिगौपव
नश्रुतिवचनात् ॥[४२/२४]॥ दर्शनार्थंह्युपासनंतच्चश्रवणादेरेवभवति । अतःकिमर्थमित्यत्रोच्यते ॥ ॥ ॐ तन्निर्धा
[४३]रणार्थनियमस्तद्दृष्टेःपृथग्घ्यप्रतिबंधःफलं ॐ ॥ ॥ तत्त्वनिश्चयोवेदार्थनियमश्चब्रह्मदृष्टेःपृथगेव । हिशब्दे
नआत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रुतिंसूचयति। श्रवणादिफलंचाज्ञानविपर्ययादि
दर्शनप्रतिबंधनिवृत्तिः । ब्रह्मतर्केच । श्रुत्वामत्वातथाध्यात्वातदज्ञानविपर्ययौ । संशयंचपराणुद्यलभतेब्रह्म
दर्शनमिति ॥ [४३/२५] ॥ ॥ ॐ [४४]प्रदानवदेवहितदुक्तं ॐ ॥ ॥ नचश्रवणादिमात्रेणब्रह्मदृष्टिर्भवति । किंतुसे
तिकर्तव्येन । यथागुरुदत्तंतथैवभवति। आचार्यवान्पुरुषोवेदेतिह्युक्तं ॥ [४४/२६] ॥ गुरुप्रसादःस्वप्रयत्नोवाबलवा
नितिनिगद्यते ॥ ॥ ॐ लिंग[४५]भूयस्त्वात्तद्धिबलीयस्तदपि ॐ ॥ ॥ ऋषभादिभ्योविद्यांज्ञात्वापिसत्यका

मेनभगवांस्त्वेवमेकामेब्रूयात् । श्रुतंह्येवमेभगवद्दृशेभ्यः । आचार्याद्ध्येवविद्याविदितासाधिष्ठंप्रापयतीतिवचनात् । अत्रहनकिंचनवीयायेत्यनुज्ञानादुपकोसलवचनाच्च । लिंगभूयस्त्वाद्गुरुप्रसादएवबलवान् । तर्हिंतावतालमितिनमंतव्यं । श्रोतव्योमंतव्यइत्यादेस्तदपिकर्तव्यं । वाराहेच । गुरुप्रसादोबलवान्नतस्माद्बलवत्तरं । तथापिश्रवणादिश्चकर्तव्योमोक्षसिद्धयइति ॥[४५]२७॥ ॥ ॐ पूर्वविकल्पः[४६]प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ ॥ नचपूर्वप्राप्तएवगुरुरितिनियमः । समग्रानुग्रहंचेत्पश्चात्तनःकरोतिस्वयमेवतदाविकल्पःस्यात् । मानसक्रियावत् । यथोभयोर्ध्यानयोःसमयोः । पूर्वस्मादुत्तमोलब्धःस्वयमेवगुरुर्यदि । गृह्णीयादविचारेणविकल्पःसमयोर्भवेत् । समग्रानुग्रहाभावात्सत्यकामःस्वकंगुरुं । ऋषभाद्यनुज्ञयाचैवप्रापतस्माद्धियुज्यतइतिबृहत्तंत्रे । समग्रानुग्रहंकश्चित्स्वयमेवसमोयदि । कुर्यात्पुनश्चगृह्णीयादविरोधेनकामतः । ध्यानयोःसमयोर्यद्वद्विकल्पःकामतोभवेत् । एवंगुरोर्द्वितीयस्यविकल्पोग्रहणेपिचेतिमहासंहितायां ॥ [४६] ॥ ॐ[४७]अतिदेशाच्चॐ ॥ ॥ ब्रह्मोपास्वब्रह्मोपचरस्वतच्छृणुहितत्त्वामवतु । यथाब्रह्मोपचरेर्यथामामुपचरेर्येचान्येमद्विधाःश्रेयसश्चतानुपास्वतानुपचरस्वतेभ्यःशृणुहितेत्वामवंत्वितिपौष्यायणश्रुतावतिदेशाच्च ॥ [४७]२८ ॥ नच कर्मणैवहिसंसिद्धिमास्थिता ॥१३९॥

जनकादयइत्यादिनाऽन्यन्मोक्षसाधनं ॥ ॥ॐविद्यैर्वतुनिर्धारणात्ॐ ॥ ॥ तमेवंविदित्वातिमृत्युमेतिना
न्यःपंथाविद्यतेअयनायेतिनिर्धारणाद्विद्ययैवमोक्षः ॥ [४८] ॥ ॐ[४९]दर्शनाच्चॐ ॥ ॥ नकेवलंविद्ययाकिंत्वपरोक्ष
ज्ञानेनैवच । सर्वान्परोमाययायंसिनीतेदृष्ट्वैवतंमुच्यतेनापरेणेतिकौशिकश्रुतेः ॥ [४९/२९] ॥ ॥ ॐ[५०]श्रुत्यादिबली
यस्त्वाच्चनबाधःॐ ॥ ॥ सावधारणाबलवतीश्रुतिः । इंद्रोश्वमेधाञ्छतमिष्ट्वापिराजाब्रह्माणमीड्यंसमुवाचोप
सन्नः । नकर्मभिर्नधनैर्नैवचान्यैःपश्येत्सुखंतेनतत्त्वंब्रवीहीतिबलवल्लिंगं । नास्त्यकृतःकृतेनेत्युपपत्तिश्च । कर्म
णाबध्यतेजंतुर्विद्ययाचविमुच्यते। तस्मात्कर्मनकुर्वंतियतयःपारदर्शिनइतियुक्तिमद्भगवद्वचनं। अतोनप्रमा
णांतरबाधः । कर्मणैवेत्ययोगव्यवच्छेदः ॥ [५०/३०] ॥ ॥ ॐ[५१]अनुबंधादिभ्यश्चॐ ॥ ॥नकेवलंश्रवणादिभिर्गुरु
प्रसादेनचब्रह्मदर्शनं । किंतुभक्त्यादिभिश्च । सर्वलक्षणसंपन्नःसर्वज्ञोविष्णुतत्परः । यद्गुरुःसुप्रसन्नःसन्दद्यात्त
न्नान्यथाभवेत् । तथाप्यनादिसंसिद्धभक्त्यादिगुणपूगतः । लभेद्गुरुप्रसादंचतस्मादेवचतद्भवेदिति । भक्तिर्वि
ष्णौगुरौचैवगुरोर्नित्यप्रसन्नतां । दद्याच्छमदमादिश्चतेनचैतेगुणाःपुनः । तैःसर्वैर्दर्शनंविष्णोःश्रवणादिकृतं
भवेदितिचनारायणतंत्रे ॥ [५१/३१] ॥ ॥ ॐ[५२]प्रज्ञांतरपृथक्त्ववद्दृष्टिश्चतदुक्तंॐ ॥ ॥उपासनाभेदवत्तद्दर्शनभेदः । त

च्चोक्तंकमठश्रुतौ।अंतर्दृष्टयोबहिर्दृष्टयोऽवतारदृष्टयःसर्वदृष्टयइति। देवावावसर्वदृष्टयस्तेषुचोत्तरोत्तरमाब्रह्म
णोन्येषुयथायोगंयथाह्याचार्याआचक्षतइति।अध्यात्मेच।दृष्ट्वैवह्यवताराणांमुच्यंतेकेचिदंजसा। दर्शनेनांत
रेणान्येदेवाःसर्वत्रदर्शनात्।तेषांविशेषमाचार्योवेत्तिसर्वज्ञतांगतइति॥[५२]३२॥ ॥ॐनसामान्यादप्युपलब्धेर्मृत्यु
वन्नहिलोकापत्तिःॐ॥ ॥नसामान्यदर्शनमात्रेणमुक्तिः। यथामृत्युमात्रात्। नहिलोकापत्तिमात्रंमुक्तिः।
सामान्यदर्शनाल्लोकामुक्तिर्योग्यात्मदर्शनादितिनारायणतंत्रे। मुच्यतेनात्रसंदेहोदृष्ट्वातुस्वात्मयोग्ययेति
च।दर्शनेनात्मयोग्येनमुक्तिर्नान्येनकेनचिदितिचाध्यात्मे ॥[५३]३३॥ भक्तिरेवैनंनयतिभक्तिरेवैनंदर्शयतिभक्ति
वशःपुरुषोभक्तिरेवभूयसीतिमाठरश्रुतेर्नपरमात्मनादर्शनमितिचेन्न। तस्यैषआत्माविशतेब्रह्मधामेतिश्रुतेः।
कथंतर्ह्येषाश्रुतिः॥॥ॐपरेणचशब्दस्यताद्विध्यंभूयस्त्वात्त्वनुबंधःॐ॥ ॥परमात्मैवभक्त्यादर्शनंप्राप्यमुक्तिंद
दातीतिप्रधानसाधनत्वाद्भक्तिःकरणत्वेनोच्यते। मायावैभवेच भक्तिस्थःपरमोविष्णुस्तयैवैनंवशंनयेत्।त
यैवदर्शनंयातःप्रदद्यान्मुक्तिमेतया। स्नेहानुबंधोयस्तस्मिन्बहुमानपुरस्सरः। भक्तिरित्युच्यतेसैवकरणंपरमी ॥ १४० ॥
शितुरिति। सर्वशब्दानांब्रह्मणिप्रवृत्तेश्च ॥ [५४]३४ ॥ जीवांशानांपृथगुत्पत्तेर्नानादियोग्यतापेक्षेतिनमंतव्यं। कु

तः॥ ॥ॐ[55]एकआत्मनःशरीरेभावात्ॐ॥ ॥अंशांशिनोरेकत्वमेव। अंशिकर्मविनिर्मितेशरीरएवांशस्यभावा
त्॥ [55] ॥ॐ[56]व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत्ॐ॥ ॥ ज्ञानादिभेदेविद्यमानेपिनांशांशिनोःपृथग्भाव
एव। तदुपासनादिभोगादंशस्य। परमसंहितायांच अंशिनस्तुपृथग्जाताअंशास्तस्यैवकर्मणा। पुनरैक्यंप्र
पद्यंतेनात्रकार्याविचारणेति॥[56][35]॥ ॥ॐ[57]अंगावबद्धास्तुनशाखासुहिप्रतिवेदंॐ॥ ॥ब्रह्माद्यंगदेवतावबद्धो
पासनादिप्रतिशाखंप्रतिवेदंचनोपसंह्रियते। हिशब्दात्समत्वाद्वोत्तमत्वाद्वानांगदेवाद्युपासनं। उपसंहार्यमि
त्याहुर्वेदसिद्धांतवेदिनइतिब्रह्मतर्कवचनात्॥ [57] ॥ॐमंत्रादिवद्वाऽविरोधःॐ॥ ॥सर्वदेवतामंत्रायथाऽधीयं
तेएवमविरोधोवा। उपासनांगदेवानांपरमांगतयाभवेत्। उपसंहृतिर्विशेषेतुफलानामन्यथानतु। पुरुषाणांवि
शेषाद्वायथायोगंभविष्यतीतिबृहत्तंत्रे॥ [58][36] ॥ ॥ॐ[59]भूम्नःक्रतुवज्ज्यायस्त्वंतथाचदर्शयतिॐ॥ ॥सर्वगुणेषुभू
मगुणस्यज्यायस्त्वंक्रतुवत्। सर्वत्रसहभावात्। दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकःक्रतुः। भूमैवदे
वःपरमोह्युपास्योनैवाभूमाफलमेषांविधत्ते। तस्माद्भूमागुणतोवैविशिष्टोयथाक्रतुःकर्ममध्येविशिष्टइतिगौपव
नश्रुतिः॥[59][37]॥ ॥ॐ[60]नानाशब्दादिभेदात्ॐ॥ ॥शब्दोनुमातथैवाक्षोयोग्यताभेदतःसदा। ब्रह्मादीनामेकम

र्थंबहुधादर्शयंतिहि । अतःपूर्णत्वमीशस्यनानैवैषांप्रदृश्यते । अतःफलस्यनानात्वंनानैवोपासनायतइतिब्र
ह्मतर्के । अतोभूमत्वमपिनानैवोपास्यते ॥[६०]३८॥ ॥ ॐविकल्पो[६१]विशिष्टफलत्वात्ॐ ॥ ॥स्वयोग्योपासनानंत
रंसामान्यस्यापिकस्यचिदुपासनंविकल्पेनभवतिविशिष्टफलापेक्षया। मुक्त्यर्थमात्मयोग्यंहिकार्यमेवह्युपास
नं । नृसिंहादिकमन्यच्चदुरितादिनिवृत्तये । उपास्यतेयथायोगंनवाफलविभेदतइतिब्रह्मतर्के ॥[६१]३९॥ ॥ ॐ
[६२]काम्यास्तुयथाकामंसमुच्चीयेरन्नवापूर्वहेत्वभावात्ॐ ॥ ॥ यस्ययस्यहियःकामस्तस्यतस्यह्युपासनं । तादृ
शानांगुणानांचसमाहारंप्रकल्पयेत् । अकामत्वान्मुमुक्षूणांनवातेषामुपासनं। तुष्ट्यर्थमीश्वरस्यैवनैवोपासा
विदुष्यतीतिबृहत्तंत्रे ॥[६२]४०॥ ॥ ॐअंगेषु[६३]यथाश्रयभावःॐ ॥ ॥ अंगदेवतानांयथायथापरमेश्वरांगाश्रय
त्वं । चक्षोःसूर्योअजायतेत्यादितथाभावनाकर्तव्या ॥[६३]॥ ॐशिष्टेश्च[६४]ॐ ॥ ॥ यस्मिन्यस्मिन्योहिचांगेनि
विष्टःपरस्यचिंत्यःसतथातथैवेतिपौत्रायणश्रुतेः ॥[६४]॥ ॐसमाहारात्[६५]ॐ ॥ ॥ अंगैःपराद्येहिदेवाविसृष्टास्त
त्तद्गुणान्परमेसंहरेत । तांश्चापितत्रैवविचिंत्यदेवान्स्थानंमुमुक्षुःपरमंव्रजेतेतिकाषायणश्रुतौसमाहारवचना
च्च ॥[६५]॥ ॐगुण[६६]साधारण्यश्रुतेश्चॐ ॥ ॥ साधारण्यात्सर्वगुणाःपरस्यसमाहार्यास्तत्त्वदृशोमुमुक्षोरितिमां

डव्यश्रुतेश्च ॥४१॥ ॥ ॐनवातत्सहभावश्रुतेःॐ ॥ ॥ नवांगदेवतोपसंहारःकार्यः । उपसंहारस्यसहाश्र वणात् ॥ ॥ ॐदर्शनाच्चॐ ॥ ॥ सत्योज्ञानःपरमानंदरूपआत्मेत्येवंनित्यदोपासनंस्यात् । नान्यत्किंचि त्समुपासीतधीरःसर्वैर्गुणैर्देवगणाउपासतइतिकमठश्रुतौ ॥ ४२ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसू त्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्यतृतीयःपादः ॥ ३ ॥ ३ ॥ ॥

॥ ॐ ॥ ज्ञानसामर्थ्यमस्मिन्पादउच्यते ॥ ॥ ॐपुरुषार्थोतःशब्दादितिबादरायणःॐ ॥ ॥ यद्दर्शनार्थमुपास नोक्तातस्माद्दर्शनात्सर्वपुरुषार्थप्राप्तिरितिबादरायणोमन्यते । यंयंलोकंमनसासंविभातिविशुद्धसत्त्वःकामय तेयांश्चकामान् । तंतंलोकंजयतेतांश्चकामांस्तस्मादात्मज्ञंह्यर्चयेद्भूतिकामइतिशब्दात् ॥ १ ॥ ॐशेषत्वात्पुरुषा र्थवादोयथान्येष्वितिजैमिनिःॐ ॥ ॥ अस्त्येवमोक्षसाधनत्वंज्ञानस्यस्वर्गादिषुतत्साधनकर्मशेषत्वेन । स्वर्गंध नाद्देहतोवैगृहाच्चप्राप्स्यंतिधीरानत्वधीराःकुतश्चिदितिवदतिजैमिनिः ॥ २ ॥ ॐआचारदर्शनात्ॐ ॥ ॥ ज्ञा निनामेवदेवादीनामाचारदर्शनात् ॥ ३ ॥ ॐतच्छ्रुतेःॐ ॥ ॥ यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्य वत्तरंभवतीतिशेषत्वश्रुतेः ॥ ४ ॥ ॐसमन्वारंभणात्ॐ ॥ ॥ कर्मैवदेहंदैविकंमानुषंवाप्यन्वारभेन्नापरस्तत्र

हेतुः । भोगांस्तदीयांश्चयथाविभागंददातिकर्मैवशुभाशुभंयदितिमाठरश्रुतेश्च । संशब्दःप्राधान्यंदर्शयति ॥ ५ ॥ ॐतद्वतोविधानात्ॐ ॥ ॥ ज्ञानीचकर्माणिसदोदितानिकुर्यादकामःसततंभवेतेतिकमठश्रुतौज्ञानवतोपिविधानात् ॥ ६ ॥ ॐनियमाच्चॐ ॥ ॥ कुर्वन्नेवेहकर्माणिजिजीविषेच्छतꣳसमाः । एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरइति ॥ ७ ॥ ॐअधिकोपदेशात्तुबादरायणस्यैवंतद्दर्शनात्ॐ ॥ ॥ ज्ञानादेवस्वर्गोज्ञानादेवापवर्गोज्ञानादेवसर्वेकामाःसंपद्यंते । तथापियथायथाकर्मकुरुतेतथातथाधिकोभवतीतिकौंठरव्यश्रुतेः । युधिष्ठिरादीनांराजसूयादिनाफलाधिक्यदर्शनाच्चेतिबादरायणस्यमतं ॥ ८ ॥ ॐतुल्यंतुदर्शनंॐ ॥ ॥ राजसूयादिकृतावकृतौचसममेवतेषांविज्ञानं । विज्ञातमेतत्सर्वेषांमुनीनांब्रह्मदर्शनात् । स्यादेवमोक्षोनान्यस्मादितितत्रापिचित्रता । स्वर्गादयःकर्मणैवनान्येनेत्यपरेविदुः । ज्ञानेनाधिक्यमित्याहुर्जैमिन्याद्यास्तुकेचन । अदृष्टमेवज्ञानेनदृष्टंनैवोपलभ्यते । इतिकेचिद्विदःप्राहुर्व्यासशिष्याइमेऽखिलाः । यस्माद्व्यासमतंसर्वंसत्यमेवततोखिलं । यथाऽऽकाशस्त्वनंतोपिव्यामोहस्तावधिस्तथा । प्रादेशोपिहिसत्येनतथैतेषांमतानितु । स्वयंतुभगवान्व्यासोव्याप्तज्ञानमहांशुमान् । अनंताकाशवत्पश्यन्निखिलंपुरुषोत्तमः । ज्ञानेनैवाप्यतेसर्वंकर्मणा

त्वधिकंभवेत्। इतिप्राहमहायोगीपुमर्थानांविनिर्णयमितिभविष्यत्पर्वणि । ज्ञानिनामपिदेवानांविशेषःकर्म भिर्भवेत्। चीर्णेऽकृतेवाज्ञानस्यनविशेषोस्तिकर्मणीतिब्रह्मतर्के ॥१॥ सर्वेषांपुरुषार्थापेक्षित्वाज्ज्ञानाधिकारि तेत्यतआह ॥॥ ॐअंसार्वत्रिकीॐ ॥॥ नसर्वेषामधिकारः॥ १०॥ ॐविभागःशतवत्ॐ॥ ॥नवकोट्योहि देवानांतेषांमध्येशतस्यतु। सोमाधिकारोवेदोक्तोब्रह्मणीद्धेशताधिके। यथातथैवासंख्येयाःप्रजास्तासुकिया ञ्जनः। ज्ञानाधिकारीसंप्रोक्तोविष्णुपादैकसंश्रयइतिवचनात्सुखापेक्षासाम्येपिविभागइष्यतेधिकारार्थं॥११॥ कस्याधिकारः॥॥ ॐ१२अध्ययनमात्रवतःॐ॥॥ अवैष्णवस्यवेदेपिह्यधिकारोनविद्यते। गुरुभक्तिविहीनस्य शमादिरहितस्यच। नचवर्णावरस्यापितस्मादध्ययनान्वितः। ब्रह्मज्ञानेतुवेदोक्तेह्यधिकारीसतांमतइतिब्रह्म तर्के। पठेद्वेदानथार्थानधीयीताथविचार्यब्रह्मविंदेदितिकौषारवश्रुतिः॥१२॥ ॥ॐ१३नाविशेषात्ॐ॥ ॥नसा मान्येनाधिकारोदेवादीनां। अथपुमर्थसाधनान्यर्थोधर्मोज्ञानमित्युत्तरोत्तरंतत्राधिकारिणोमनुष्याऋषयोदे वाइत्युत्तरोत्तरमितिकौंडिन्यश्रुतिः॥१३॥ अथमुनिरमौनंचमौनंचनिर्विद्याथब्राह्मणःसब्राह्मणःकेनस्याद्येन स्यात्तेनेदृशएवेतिज्ञानिनोयथेष्टाचरणंविधीयतइत्यतआह॥ ॥ॐ१४स्तुतयेनुमतिर्वाॐ॥ ॥नविधिःज्ञानि

नःस्तुतयेऽनुमतिमात्रंवा । युज्यतेच ॥ [14] ॥ ॐकामकारेणचैकेॐ ॥ ॥ कामचाराःकामभक्षाःकामवादाःका
मेनैवेमंदेहमुत्सृज्याथपरात्परमीयुरनारंभणमितिचैकेपठंति॥ [15] ॥ ॐउपमर्दंचॐ ॥ ॥ ओमित्युच्चार्यांतरिम
मात्मानमभिपश्योपमृद्यपुण्यंचपापंचकाममाचरंतोब्रह्मानुव्रजंतीतिचतुरश्रुतौ॥ [16] ॥ॐऊर्ध्वरेतःसुचशब्देहि
ॐ॥ ॥नतावताकामचाराणांज्ञानेऽधिकारः।यइमंपरमंगुह्यमूर्ध्वरेतस्सुभाषयेत्। नतथाविद्यतेभूयान्यंप्राप्या
न्येपिभूयसइतिमाठरश्रुतेः॥ [17] ॥ ॐपरामर्शंजैमिनिरचोदनाचापवदतिहिॐ॥ ॥ प्रातरुत्थायसंध्यामुपा
सीतयत्संध्यामुपासतेब्रह्मैवतदुपासतेऽथदेवान्नमेज्जुहुयाद्वेदानावर्तयीतनान्यत्किंचिदाचरेन्नसुरांपिबेन्नपलां
डुंभक्षयीतनभृशंवदेन्नविस्मरेदात्मानंसोमंपिबेद्धुतशेषेणवर्तयेदित्युक्ताचारपरामर्शेनविधिबंधवर्जितत्वेन
कामतएवतस्यचरणंकामचारइतिजैमिनिर्मन्यते । नचनिषिद्धंकर्मकर्तव्यमेवेतिचोदना । ब्राह्मणोनहंतव्यइ
त्याद्यपवादश्च॥ [18] ॥ॐअनुष्ठेयंबादरायणःसाम्यश्रुतेःॐ॥ ॥अनुष्ठेयानांमध्यएवकामतश्चरणंकामतोनिवृ
त्तिरितिबादरायणोमन्यते । केनस्याद्येनस्यात्तेनेदृशएवेतिसाम्यश्रुतेः । यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमा
नवः । आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यतइतिभगवद्वचनाच ॥ [19] ॥ ॐविधिर्वाधारणवत्ॐ ॥ ॥ के

नस्याद्येनस्यादितिविधिर्वा । यथावेदधारणंत्रैवर्णिकानांविहितंनान्येषां । एवंस्वमतानुसारिणीप्रवृत्तिर्ज्ञा
निनांविहिता । नतत्राधर्मशंकाकार्या । नान्येषामितिवा । स्वेच्छयैवप्रवृत्तिस्तुब्रह्मणोविधिचोदिता । ना
शंक्यंतन्मतंक्वापिविष्णोःप्रत्यक्षचोदना । इतरेषांनविहितास्वेच्छावृत्तिःकथंचनेतिब्राह्मे ॥ २० ॥ ॐ[२१]स्तुतिमा
त्रमुपादानादितिचेन्नापूर्वत्वात्ॐ ॥ ॥ स्तुतिमात्रमेवस्वेच्छाचरणंनविधिः । तैरपिसामान्यविधिस्वीकारा
दितिचेन्न । अपूर्वत्वात् । परवशत्वात् । सर्वविध्यतिक्रमेणस्तुतिमात्रविषयत्वंपरब्रह्मणएवहि । विधीना
विषयास्त्वन्येब्रह्मणःस्वेच्छयाकृतौ । परस्यब्रह्मणोह्येवसर्वविध्यतिदूरतेतिब्रह्मतर्के ॥ २१ ॥ ॐ[२२]भाविशब्दाच्च
ॐ ॥ ॥ यथाविधानमपरेविधिर्भावेप्रजापतेः । ब्रह्मणःपरमस्यैवसर्वविध्यतिदूरतेतिचतुरश्रुतौ॥ २२ ॥ॐ[२३]पा
रिप्लवार्थाइतिचेन्नविशेषितत्वात्ॐ॥ ॥केनस्याद्येनस्यादित्यादयःस्थिरत्वनिवृत्त्यर्थाइतिचेन्न । त्रेधाहिज्ञानि
नोहवावभवंतिविधिनियताअनियताःस्वेच्छानियताइतिविधिनियतामनुष्याअनियताहिदेवाब्रह्मैवस्वे
च्छानियतइतिगौपवनश्रुतौविशेषितत्वात् ॥ २३ ॥ ॐ[२४]तथाचैकवाक्योपबंधात्ॐ ॥ ॥ एवंसतिविधिवाक्या
नांस्वेच्छावृत्तिवाक्यानांचसंबंधोभवति ॥ २४ ॥ ॐ[२५]अतएवचाग्नींधनाद्यनपेक्षाॐ ॥ ॥ अतएवज्ञानस्यमोक्ष

दाने नाग्निहोत्राद्यपेक्षा । ब्रह्मतर्केच । येषांज्ञानंसमुत्पन्नंतेषांमोक्षोविनिश्चितः। शुभकर्मभिराधिक्यंविपरीतैर्विपर्ययः। स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणःप्रायशस्तथा।देवानामपिसर्वेषांविशेषादुत्तरोत्तरमिति ॥ २५ ॥ ॐ २६ सर्वापेक्षाचयज्ञादिश्रुतेरश्ववत् ॐ॥ ॥सर्वधर्मापेक्षाचज्ञानस्योत्पत्तौ विविदिषंतियज्ञेनदानेनतपसाऽनाशकेनेतिश्रुतेः। यथागतिनिष्पत्त्यर्थमश्वादयोपेक्ष्यंतेननिष्पन्नगतेर्ग्रामादिप्राप्तौ॥ २६ ॥ॐ २७ शमदमाद्युपेतःस्यात्तथापितु तद्विधेस्तदंगतयातेषामवश्यानुष्ठेयत्वात् ॐ॥ यद्यपिज्ञानेनैवमोक्षोनियतस्तथापिज्ञानीशमदमाद्युपेतःस्यात्। आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन्शांतोभवेद्दांतोभवेदनुकूलोभवेदाचार्यंपरिचरेत्परिचरेदाचार्यमितिमाठरश्रुतौज्ञानिनोपितद्विधेः। ब्राह्मींवावतउपनिषदमब्रूमेतितस्यैतपोदमःकर्मेतिप्रतिष्ठा वेदाःसर्वांगानिसत्यमायतनंयोवाएतामुपनिषदमेवंवेदेतिज्ञानांगतयातेषामवश्यानुष्ठेयत्वात्।यस्यज्ञानंतस्यमोक्षइतिनात्रविचारणा।तस्यशांत्यादयोंगानितस्मात्तेषामनुष्ठितिः । अवश्यकरणीयास्यादन्यथाल्पफलंभवेदित्याभेये। तुशब्दःपूर्णफलार्थत्वंसूचयति॥ २७ ॥ॐ २८ सर्वान्नानुमतिश्चप्राणात्ययेतद्दर्शनात् ॐ॥ ॥यदिहवाअप्येवंविन्निखिलंभक्षयीतैवमेवसभवतीतिसर्वान्नानुमतिःप्राणात्ययविषया। नवाअजीविष्यमिमानखादन्निितिहोवाचका

मोमउदपानमितिदर्शनात्॥[२८]॥ॐ[२९]अबाधाच्चॐ॥ ॥अन्याय्यचरणाभावेनहिज्ञानस्यबाधनं।अतोविद्वान
पिन्याय्यंवर्तेतोत्कर्षसिद्धयइतिब्रह्मतर्के॥[२९]॥ॐ[३०]अपिस्मर्यतेॐ॥ ॥अतीतानागतज्ञानीत्रैलोक्योद्धरणक्षमः।
एतादृशोपिनाचारंश्रौतंस्मार्तंपरित्यजेदितिहरिवंशेषु॥[३०]॥ॐ[३१]शब्दश्चातोकामचारेॐ॥ ॥सयएतदेवंविदेवं
मन्वानएवंपश्यन्नकामचरितंचरेन्नकामंभक्षयीतनकाममनुवर्तेतेतिकौंडिन्यश्रुतौ ।अतइत्यल्पफलत्वंसूचय
ति।ननिषिद्धानिवर्तेतपूर्णज्ञानफलेच्छयेतिपाद्मे॥[३१]॥ॐविहितत्वाच्चाश्रमकर्मापिॐ॥ ॥नकेवलंनिषिद्धा
करणेनपूर्यते।कर्तव्यंचवर्णाश्रमविहितंकर्म । पश्यन्नपीममात्मानंकुर्यात्कर्माविचारयन्।यदात्मनःसुनियत
मानंदोत्कर्षमाप्नुयादितिकौषारवश्रुतौविहितत्वाच्च।अपिशब्दोवर्णधर्मसमुच्चयार्थः॥[३२]॥ॐ[३३]सहकारित्वेनच
ॐ॥ ॥यथाराज्ञःसहकार्येवमंत्रीतथाप्यृतेतंक्षितिपःकार्यमृच्छेत्।एवंज्ञानंकर्मविनापिकार्यसहायभूतंनवि
चारःकुतश्चिदितिकमठश्रुतौसहकारित्वोक्तेश्च।ज्ञानान्मोक्षोभवत्येवसर्वाकार्यकृतोपितु।आनंदोह्सतेऽकार्या
च्छुभंकृत्वातुवर्धतइतिब्रह्मांडे।सर्वदुःखनिवृत्तिस्तुज्ञानिनोनिश्चितैवहि। उपासयाकर्मभिश्चभक्त्याचानंदचि
त्रतेतिबृहत्तंत्रे।धर्मस्वरूपचित्रत्वाद्योयोदेवमनोगतः।सएवधर्मोविज्ञेयोनह्येतेलोकसंमिताइतिचपाद्मे॥[३३]४॥

॥ ॥ ॐ[३४]सर्वथापितुतएवोभयलिंगात्ॐ ॥ ॥ सर्वप्रकारेणोत्साहेपियेज्ञानयोग्यास्तएवज्ञानंप्राप्नुवंतिना
न्ये । यआत्माऽपहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघित्सोपिपासःसत्यकामःसत्यसंकल्पःसोन्वेष्टव्यःस
विजिज्ञासितव्यइतिश्रुत्याऽऽचार्योपदेशसाम्येपिविरोचनोविपरीतज्ञानमापेंद्रःसम्यग्ज्ञानमित्युभयविधलिंगा
त्॥[३४]॥ॐ[३५]अनभिभवंचदर्शयतिॐ॥ ॥दैवीमेवसंपत्तिंदेवाअभिगच्छंत्यासुरीमेवचासुरानैवैतयोरभिभवःक
दाचित्स्वभावएवह्यवतिष्ठतइतिस्वभावानभिभवंचदर्शयति॥[३५]॥ ॐ[३६]अंतराचापितुतद्दृष्टेःॐ॥ ॥सम्यग्ज्ञान
विपरीतज्ञानयोरंतरास्थितानामपिदेवासुरभावयोर्दार्ढ्यदृष्टेः ॥[३६]॥ ॐ[३७]अपिस्मर्यतेॐ ॥ ॥ असुराआ
सुरेणैवस्वभावेनचकर्मणा । ज्ञानेनविपरीतेनतमोयांतिविनिश्चयात्। देवादैवस्वभावेनकर्मणाचाप्यसंशयं ।
सम्यग्ज्ञानेनपरमांगतिंगच्छंतिवैष्णवीं। नानयोरन्यथाभावःकदाचित्कापिविद्यते। मानुषामिश्रमतयोविमि
श्रगतयोपिचेतिस्कांदे ॥[३७]॥ ॐ[३८]विशेषानुग्रहंचॐ॥ ॥शृण्वेवीरउग्रमुग्रंदमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्यराजाचोष्कूयतेविशइंद्रोमनुष्यान्इतिविशेषानुग्रहंचदर्शयतिदेवेषुपरमेश्वरस्य। असुरा
न्दमयन्विष्णुःस्वपदंचसुरान्नयन्।पुनःपुनर्मानुषांस्तुसृतावावर्तयत्यसाविति भविष्यत्पर्वणि ॥[३८]॥ ॐ[३९]अंतस्त्वि

तरज्यायोलिंगाच्चॐ ॥ ॥देवभागादसुरभागएवबहुलः।तस्मान्नजनतामियादितिलिंगात्। चशब्दात्ततःक
नीयसाएवदेवाज्यायसाअसुराइतिश्रुतेश्च। असुराबहुलायस्मात्तस्मान्नजनतामियादितिचब्राह्मे॥ ३९ ॥ॐ४०तं
द्भूतस्यतुतद्भावोजैमिनेरपिनियमातद्रूपाभावेभ्यःॐ ॥॥ असुरजातेरेवासुरत्वंदेवजातेरेवदेवत्वंजैमिनेरपि
सिद्धमेव। नासुरादैवींनदेवाआसुरींनमनुष्यादैवीमासुरींचगतिमीयुरात्मीयामेवजातिमनुभवंतीतिनियमश्रु
तेः। नासुराणांदैवंरूपंनदेवानामासुरंनचोभयंमनुष्याणांयोयद्रूपःसतद्रूपोनिसर्गोह्येषभवतीत्यतद्रूपत्वश्रुतेः।
तंभूतिरितिदेवाउपासांचक्रिरेतेबभूवुस्तस्माद्धाऽप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसित्यभूरित्यसुरास्तेहपराबभूवुरि
तिदेवासुराणांभावाभावश्रुतेश्च। देवानांभूतिरित्येवमनोविष्णौस्वभावतः। असुराणामभूतित्वेनैतन्नेयमतो
न्यथा। देवाःशापाभिभूतत्वात्प्रह्लादाद्याबभूविरे। अतःसुगतिरेतेषांनान्यथाव्यत्ययोभवेदितिचाध्यात्मे॥ ४० ॥
॥ ॥ ॐ४१नचाधिकारिकमपिपतनानुमानात्तदयोगात्ॐ ॥ ॥नचपरमात्मैश्वर्यादिकमाकांक्ष्यं । ब्रह्मादी
नामपिनाकांक्ष्यंकिमुपरस्येतिसूचयितुमपिशब्दः। चशब्दस्तुज्ञानार्थिनांपूर्वोक्तादित्थंभावांतरसूचकः । अ
योग्यमारोढुंप्रयतन्प्रपतन्हिदृश्यते। एवमयोग्यस्यपरमात्मैश्वर्यस्यब्रह्मादिपदस्यचाकांक्षायांपतनमनुमीयते।

नदेवपदमन्विच्छेत्कुतएवहरेर्गुणान्। इच्छन्पततिपूर्वस्मादधस्ताद्यत्रनोत्थितिरितिब्रह्मांडे।स्वकीयमिच्छमानंतुराजाद्याःपातयंतिहि। एवमेवसुराद्याश्चहरिश्चस्वपदेच्छुकमित्याद्यनुमानरूपवाक्याच्च। मायाभिरुत्सिसृप्सतइंद्रद्यामारुरुक्षतः। अवदस्यूँरधूनुथाइतिश्रुतिः॥[४१]॥ ॐ[४२]उपपूर्वमपीत्येकेभावशमनवत्तदुक्तंॐ॥ ॥ उपदेवपदंचनाकांक्ष्यमित्येके। भावशमनवद्दृषिपदवदेव। तच्चोक्तमिंद्रद्युम्नश्रुतौ। अथयथर्षीन्प्रजापतीन्नाकांक्षेदेवंनगंधर्वान्नविद्याधरान्नसिद्धानिति। बृहत्संहितायांच। नदेवानभिकांक्षेतकुतएवहरेर्गुणान्। प्राजापत्यान्नचार्षांश्चगांधर्वादीनपिकचित्। ऋष्यादिषुविशेषेतुदोषोनैवाविशेषतइतिविशेषदर्शनार्थमेकइत्युक्तं॥[४२]॥ ॐ[४३]बहिस्तूभयथापिस्मृतेराचाराच्चॐ॥ ॥ देवर्षिगंधर्वादिपदेभ्योन्यत्रशुभविषयआकांक्षायामनाकांक्षायांचनपतनं। देवर्षिगंधर्वाणांपदाकांक्षीपतेद्ध्रुवं। अन्यत्रशुभमाकांक्षन्नपतेदविरोधतइतिस्मृतेः।नानात्वमेवकामानांनाकामःक्वचदृश्यते। अतोऽविरुद्धकामःस्यादकामस्तेनभण्यतइत्याचाराच्च॥[४३]॥ ॐ[४४]स्वामिनःफलश्रुतेरित्यात्रेयःॐ॥ ॥ब्रह्मविदाप्नोतिपरमित्यादिफलंस्वामिनांदेवानामेवभवति। यदुकिंचेमाःप्रजाःशुभमाचरंतिदेवाएवतदाचरंतियदुकिंचेमाःप्रजाविजानतेदेवाएवतद्विजानतेदेवानांह्येतद्भवतिस्वामीहिफलमश्नुतेना

स्वामीकर्मकुर्वाणइतिमाध्यंदिनायनश्रुतेरित्यात्रेयोमन्यते ॥[४४]॥ ॐ[४५]आर्त्विज्यमित्यौडुलोमिस्तस्मैहिपरिक्रियतेॐ ॥ ॥ सत्रयागेष्वृत्विजामपिफलदर्शनादल्पंफलंप्रजानामपिभवतीत्यौडुलोमिर्मन्यते। तदर्थंदेवैःक्रियमाणत्वात्॥ [४५] ॥ॐ[४६]सहकार्यंतरविधिःपक्षेणतृतीयंतद्वतोविध्यादिवत्ॐ॥ ॥तृतीयःस्वपक्षः।देवानांज्ञानादिकर्मणिसहकार्यंतरत्वेनप्रजाविधीयंते । यथाप्रजावतोराज्ञःप्रजाःसहकारित्वेनविधीयंते। यथावाचार्यस्यशिष्याः । वाराहेच ज्ञानादिदानंदेवानांविष्णुनासाधुचोदितं । वेदेषुतेषांविहितंतत्राचार्योमहत्तरः। विहितःसहकारित्वेसहकार्यंतरंप्रजाः।पातृत्वेनयथाराज्ञोयथाशिष्यागुरोरपि।तस्माच्छ्रुतंफलंतासामाचार्याणांमहत्तरं । ततोमहत्तरंप्रोक्तंदेवानामुत्तरोत्तरमिति॥[४६]॥ ॥ ॐ[४७]कृत्स्नभावात्तुगृहिणोपसंहारःॐ ॥ ॥ कुटुंबीशुचौदेशेस्वाध्यायमधीयानोधार्मिकान्विदधदित्युक्त्वानचपुनरावर्ततेनचपुनरावर्ततइतिगृहिणोपसंहारःक्रियते । तस्माद्गृहस्थस्यैवोत्तमत्वमितिनवाच्यं।यतःकृत्स्नगृहस्थान्देवानपेक्ष्यैवोपसंहारःक्रियते। कृत्स्नाह्येतेगृहिणोदेवाःकृत्स्नाह्येतेयतयोतएतेषांनपुत्रादायमुपयंतिनचैतेगृहान्विसृजंत्यरागाअद्वेषाअलोभाःसर्वभोगाःसर्वज्ञाःसर्वकर्तारइतिपौत्रायणश्रुतिः ॥[४७]॥ ॐ[४८]मौनर्वदितरेषामप्युपदेशात्ॐ॥ ॥ नचाश्रमद्वयमेवदेवा

नां। देवाएवब्रह्मचारिणोदेवाएवगृहस्थादेवाएववनस्थायथाह्येतेमुनयएवंसर्ववर्णाःसर्वाश्रमाःसर्वंह्येतेकर्मकुर्वंतीतिकौंठरव्यश्रुतौयतित्वदृष्टांतेनान्येषामप्युपदेशात् ॥ [४८] ॥ ॥ॐअनाविष्कुर्वन्नन्वयात्ॐ॥ ॥एतांविद्यामधीत्यब्रह्मदर्शीवावभवति।सएतांमनुष्येषुविब्रूयात्।यथायथाहवैब्रूयात्तथातथाधिकोभवतीतिमाठरश्रुतौविद्यादानंश्रूयते।तच्चबहूनांस्वीकरणार्थमाविष्कारेणेतिनमंतव्यं।अन्वयाद्युक्तेः।आविष्कारेऽयोग्यानामपिस्वीकारप्राप्तिः। तच्चनिषिद्धं। मानस्तेनेभ्योयेअभिद्रुहस्पदेनिरामिणोरिपवोन्नेषुजागृधुः। येषांनैतन्नापरंकिंचनैकंब्रह्मणस्पतेब्रूहितेभ्यःकदाचित्।अथोपशमेनोपरतामनुष्यायेधर्मिणोब्रूहितेभ्यःसदानः। आदेवानामोहतेविप्रयोहदिबृहस्पतेनपरःसाम्नोविदुरिति। विद्याहवैब्राह्मणमाजगामगोपायमांशेवधिष्टेहमस्मि।अनार्यकायानृजवेशठायनमांब्रूयादृजवेब्रूहिनित्यमितिच ॥ [४९] ॥ ॥ ॐऐहिकंमप्रस्तुतप्रतिबंधेतद्दर्शनात्ॐ ॥ ॥ आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिदर्शनार्थंश्रवणादिविधीयते। तच्चदर्शनमैहिकमेवप्रारब्धप्रतिबंधाभावे। श्रुत्वात्मानंमतिपूर्वंह्युपास्यइहैवदृष्टिंपरमस्यविंदेत्। यद्यारब्धंकर्मनिबंधकंस्यात्प्रेत्यैवपश्येद्योगमेवान्ववेक्ष्येतिसौपर्णश्रुतौतद्दर्शनात्। अनादिजन्मसंबंधंनिर्भेत्तुंपापपंजरं। यावत्यासेवयाशक्यंताव

त्कार्यंनसंशयः। यावद्दूरेस्थितोगम्यात्तावद्गंतव्यमेवहि। इहजन्मांतरेवापितावत्स्यैवतुदर्शनं। श्रवणंमननंचैव निदिध्यासनमेवच। परेगुरौचयाभक्तिःपरिचर्यादिकंहरेः।एषासेवेतिसंप्रोक्तायययातद्दर्शनंभवेदितिबृहत्संहितायां॥१०॥ ॥ॐएवंमुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेःॐ ॥ ॥ एवमेवप्रारब्धकर्माभावे शरीरपातानंतरमेवमोक्षः।तद्भावेजन्मांतराणीत्यनियमः। धर्मीस्वर्गंविधर्मीनिरयमेत्येवब्रह्मसंस्थोऽमृतमेत्येव ब्रह्मसंस्थोमृतमेत्येवेतिब्रह्मसंस्थस्यमोक्षस्यैवावधारणात्। विद्वानमृतमाप्नोतिनात्रकार्याविचारणा। अवसन्नं यदारब्धंकर्मतत्रैवगच्छति।नचेद्बहूनिजन्मानिप्राप्यैवांतेनसंशयइतिनारायणाध्यात्मे॥११॥इतिश्रीमत्कृष्ण द्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्यचतुर्थःपादः॥३॥ ४॥



श्रीगुरुभ्योनमः ॥ ॐ ॥ फलंनिगद्यतेस्मिन्नध्याये । कर्मनाशाख्यंफलमस्मिन्पादे । नित्यशःकार्यंसर्वथाभाव्यं साधनंप्रथमतउच्यते । प्रायिकत्वाच्चाध्यायानांपादानांचनविरोधः॥ ॥ॐ[1]आवृत्तिरसकृदुपदेशात्ॐ॥ ॥आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइत्यादीनांनाग्निष्टोमादिवदेकवारेणैवफलप्राप्तिः । किंत्वावृत्तिःकर्तव्या । सएषोऽणिमैतदात्म्यमिदंसर्वमित्याद्यसकृदुपदेशात् ॥[1]॥ ॐलिंगाच्च[2]ॐ ॥ ॥ सतपोतप्यतपुनरेववरुणंपितरमुपससारेत्याद्यावर्तनलिंगाच्च । नित्यशःश्रवणंचैवमननंध्यानमेवच । कर्तव्यमेवपुरुषैर्ब्रह्मदर्शनमिच्छुभिरितिबृहत्तंत्रे॥[2]॥ ॥ॐ[3]आत्मेतितूपगच्छंतिग्राहयंतिचॐ॥ ॥ आत्मेत्युपदेशउपासनंचमोक्षार्थिभिः सर्वथाकार्यमेव । नान्यंविचिंतयआत्मानमेवाहंविजानीयामात्मानमुपासआत्माहिममैषभवतीतिह्युपगच्छंति । आत्मेत्येवोपास्वआत्मेत्येवविजानीहिनान्यंकिंचनविजानथआत्माह्येवैषभवतीतिग्राहयंतिच । आत्मेत्युपासनंकार्यंसर्वथैवमुमुक्षुभिः । नानाक्लेशसमायुक्तोप्येतावन्नैवविस्मरेदितिभविष्यत्पर्वणि । आत्माविष्णुरितिध्यानंविशेषणविशेष्यतः । सर्वेषांचमुमुक्षूणामुपदेशश्चतादृशः । कर्तव्योनास्यहानेनकस्यचिन्मोक्षइष्यतइतिब्राह्मे ॥[3]॥ ॥ ॐनप्रतीकेनहिसःॐ ॥ ॥ नामब्रह्मेत्युपासीतेत्यादिनाशब्दब्रांत्यानप्रतीकेब्रह्मदृष्टिःका

र्या। किंतुतत्स्थत्वेनैवोपासनंकार्यं। ब्रह्मतर्केच। नामादिप्राणपर्यंतमुभयोःप्रथमात्वतः। ऐक्यदृष्टिरितिभ्रा
तिरबुधानांभविष्यति। नामादिस्थितिरेवात्रब्रह्मणोहिविधीयते। सर्वार्थाप्रथमायस्मात्सप्तम्यर्थाततोमतेति
॥३॥ ॥ ॐब्रह्मदृष्टिरुत्कर्षात्ॐ ॥ ॥ ब्रह्मदृष्टिश्चसर्वथाकार्यैवपरमेश्वरे। उत्कृष्टत्वात्। ब्रह्मदृष्ट्यासदोपास्योवि
ष्णुःसर्वैरपिध्रुवं। महत्त्ववाचीशब्दोयंमहत्त्वज्ञानमेवहि। सर्वतःप्रीतिजनकमतस्तत्सर्वथाभवेत्। आत्मेत्येवय
दोपासातदाब्रह्मत्वसंयुता। कार्यैवसर्वथाविष्णोर्ब्रह्मत्वंनपरित्यजेदितिब्रह्मतर्के ॥४॥ ॥ ॐआदित्यादिमतय
श्चांगउपपत्तेःॐ ॥ ॥ चक्षोःसूर्योअजायतेत्याद्युपासनंचदेवानांकार्यमेव। स्वोत्पत्तिस्थानत्वात्स्वाश्रयत्वान्मु
क्तौतत्रलयस्यापेक्षितत्वाच्चोपपन्नंतेषांतथोपासनं। नारायणतंत्रे। आधिव्याधिनिमित्तेनविक्षिप्तमनसोपि
तु। गुणानांस्मरणाशक्तौविष्णोर्ब्रह्मत्वमेवतु। स्मर्तव्यंसततंतत्तुनकदाचित्परित्यजेत्। अत्रसर्वगुणानांच
यतोंतर्भावइष्यते। स्वोत्पत्त्यंगंचदेवानांविष्णोश्चित्यंसदैवतु। तेषांतत्रप्रवेशोहिमुक्तिरित्युच्यतेबुधैः।
तदाश्रिताश्चतेनित्यंततश्चिंत्यंविशेषतइति ॥ ५ ॥ ॥ ॐआसीनःसंभवात्ॐ ॥ ॥ सर्वदोपासनंकुर्वन्नप्या
सीनोविशेषतःकुर्यात्। तदाविक्षेपाल्पत्वेनसंभवात् ॥ ७ ॥ ॐध्यानाच्चॐ ॥ ॥ स्मरणोपासनंचैवध्याना

त्मकमितिद्विधा। स्मरणंसर्वदायोग्यंध्यानोपासनमासने। नैरंतर्यंमनोवृत्तेर्ध्यानमित्युच्यतेबुधैः। आसीनस्य भवेत्तत्तुनशयानस्यनिद्रया। स्थितस्यगच्छतोवापिविक्षेपस्यैवसंभवात्। स्मरणात्परमंज्ञेयंध्यानंनास्त्यत्रसंशय इतिनारायणतंत्रे। अतोध्यानत्वाच्च॥८॥ ॐअचलत्वंचापेक्ष्यॐ॥ ॥ अचलंचेच्छरीरंस्यान्मनसश्चाप्यचालनं। चलनेतुशरीरस्यचंचलंचमनोभवेदितिब्रह्मांडे॥९॥ ॐस्मरंतिचॐ॥ ॥ समंकायशिरोग्रीवंधारयन्नचलं स्थिरः। संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलोकयन्नित्यादि॥१०॥ॐयत्रैकाग्रतातत्राविशेषात्ॐ॥ ॥ देशकालावस्थादिषुयत्रैकाग्रताभवतितत्रैवस्थातव्यं। तमेवदेशंसेवेततंकालंतामवस्थितिं। तानेवभोगान्भुंजीतमनोयत्रप्रसीदति। नहिदेशादिभिःकश्चिद्विशेषःसमुदीरितः। मनःप्रसादनार्थंहिदेशकालादिचिंतनेतिवाराहे।११। ॥ ॐआप्रायणात्तत्रापिहिदृष्टंॐ॥ ॥यावन्मोक्षस्तावदुपासनादिकार्यं। सयोहवैतद्भगवन्मनुष्येषुप्रायणांतमोंकारमभिध्यायीतेतिहिश्रुतिः। सर्वदैनमुपासीतयावद्विमुक्तिर्मुक्ताअपिह्येनमुपासतइतिसौपर्णश्रुतिः। शृणुयाद्यावदज्ञानंमतिर्यावदयुक्तता। ध्यानंचयावदीक्षास्यान्नेक्षाक्कचनबाध्यते। दृष्टतत्त्वस्यचध्यानंयदा दृष्टिर्नविद्यते। भक्तिश्चानंतकालीनापरमेब्रह्मणिस्फुटा। आविमुक्तेर्विधिर्नित्यंस्वतएवततःपरमितिब्रह्मांडे

॥[१२]७॥ ॥ ॐ[१३]तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात्ॐ ॥ ॥ ब्रह्मदर्शनउत्तराघस्याश्लेषःपूर्वस्य विनाशश्च । तद्यथापुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यते ॥ तद्यथेषीकातूलमग्नौप्रो तंप्रदूयतेएवंहैवास्यसर्वेपाप्मानःप्रदूयंतइतितद्व्यपदेशात् ॥[१३]॥ ॐ[१४]इतरस्याप्येवमसंश्लेषःपातेतुॐ ॥॥ पुण्य स्याप्येवमसंश्लेषःपाते।तुशब्दोनुत्थानवाची।यथाऽश्लेषोविनाशश्चमुक्तस्यतुविकर्मणः । एवंसुकर्मणश्चापिपत तस्तमसिध्रुवमित्याग्नेये ॥[१४]॥ ॐ[१५]अनारब्धकार्येएवतुपूर्वेतदवधेःॐ ॥ ॥ अनारब्धकार्येएवपूर्वेपुण्यपापेवि नश्यतः। तस्यतावदेवचिरंयावन्नविमोक्ष्येथसंपत्स्यतइतितदवधेः । तुशब्दःस्मृतिद्योतकः। यदनारब्धपापं स्यात्तद्विनश्यतिनिश्चयात्। पश्यतोब्रह्मनिर्द्वंद्वंहीनंचब्रह्मपश्यतः। द्विषतोवाभवेत्पुण्यनाशोनास्त्यत्रसंशयः। तस्याप्यारब्धकार्यस्यनविनाशोस्तिकुत्रचित् । आरब्धयोश्चनाशःस्यादल्पयोःपुण्यपापयोरितिनारायणतं त्रे ॥[१५]॥ ॐ[१६]अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात्ॐ ॥॥ अग्निहोत्राद्यपितुमोक्षानुभवायैव।तुशब्दाद्ब्रह्मदर्श नवतः। सएनमविदितोनभुनक्तियथावेदोवाअननूक्तोन्यद्वाकर्माकृतं । यदिहवाअप्यनेवंविन्महत्पुण्यंकर्म करोतितद्धास्यांततःक्षीयतएवात्मानमेवलोकमुपासीतसयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्मा

ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजतइतितद्दर्शनात् ॥ १६ ॥ॐअतोन्यदपीत्येकेषामुभयोःॐ ॥ ॥ मुक्तावनुभवकारणाद्यदन्यत्तत्पुण्यमपिविनश्यति । अप्रारब्धमनभीष्टंच।तथाह्येकेषांपाठउभयोस्त्यागेन। तस्यपुत्रादायमुपयंतिसुहृदःसाधुकृत्यांद्विषंतःपापकृत्यामिति । अनभीष्टमनारब्धंपुण्यमप्यस्यनश्यति । किमुपापंपरब्रह्मज्ञानिनोनात्रसंशयइतिपाद्मे ॥ १७ ॥ ॐयदेवविद्ययेतिहिॐ॥ ॥ ब्रह्मदर्शिकृतमल्पमपिपुण्यंमहत्तममनंतंचभवति । यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीतिश्रुतेः । नहास्यकर्मक्षीयतइतिच ।अल्पमात्रकृतोधर्मोभवेज्ज्ञानवतोमहान् । महानपिकृतोधर्मोह्यज्ञानांनिष्फलोभवेदितिचभारते॥ १८ ॥ॐभोगेनत्वितरेक्षपयित्वाथसंपत्स्यतेॐ ॥ ॥ आरब्धपुण्यपापेभोगेनक्षपयित्वाब्रह्मसंपत्स्यते । अथेतिनियमसूचकः। आरब्धपुण्यपापस्यभोगेनक्षपणादनु । प्राप्नोत्येवतमोघोरंब्रह्मवानात्रसंशयः ।ब्रह्मणांशतकालात्तुपूर्वमारब्धसंक्षयः । नियमेनभवेन्नात्रकार्याकाचिद्विचारणेतिचनारायणतंत्रे ॥ १९ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्यप्रथमःपादः ॥ ४ ॥ १ ॥ ॥ ॥

॥ॐ॥ देवानांमोक्षउत्क्रांतिश्चास्मिन्पादउच्यते ॥ ॥ ॐवाङ्मनसिदर्शनाच्छब्दाच्चॐ ॥ ॥ वागभिमानिन्यु

मामनोभिमानिनिरुद्रेविलीयते। वाचोमनोवशत्वदर्शनात्। तस्ययावन्नवाङ्मनसिसंपद्यतइतिशब्दाच्च। उमा
वैवाक्समुद्दिष्टामनोरुद्रउदाहृतः। तदेतन्मिथुनंज्ञात्वानदांपत्याद्विहीयतइतिस्कांदे॥ [1] ॥ ॐ[2] अतएवचसर्वाण्य
नुॐ ॥ ॥ अतएवचशब्दात्सर्वाणिदैवतानियथानुकूलंविलीयंतेअग्नौसर्वेदेवाविलीयंतेअग्निरिंद्रेइंद्रउमायांउ
मारुद्रेविलीयतेएवमन्यानिदैवतानियथानुकूलमितिहिगौपवनश्रुतिः॥ [2] ॥ ॐ[3] तन्मनःप्राणउत्तरात्ॐ ॥ ॥ म
नःप्राणइत्युत्तराद्वचनान्मनोभिमानीरुद्रःप्राणेवायौविलीयते। वायोर्वावरुद्रउदेतिवायौविलीयतेतस्मादाहु
र्वायुर्देवानांश्रेष्ठइतिचकौंडिन्यश्रुतिः ॥ [3] ॥ ॐ सोध्यक्षेतदुपगमादिभ्यःॐ ॥ ॥ सप्राणःपरमात्मनिविलीयते।
सर्वेप्राणमुपगच्छंतिप्राणःपरमुपगच्छतिप्राणंदेवाअनुप्राणंतिप्राणःपरमनुप्राणितितस्मादाहुःप्राणस्यप्राणइ
तिप्राणःपरस्यांदेवतायां। मुक्ताःसंतोग्निमाविश्यदेवाःसर्वेपिभुंजते। अग्निरिंद्रंतथेंद्रश्चवायुमाविश्यसोपितु।
आविश्यपरमात्मानंभुंक्तेभोगांस्तुबाह्यकान्। नह्यानंदोनिजस्तेषांपरैर्लभ्यःकथंचन। किमुविष्णोःपरानंदो
नतेविष्णावितिश्रुतेः। प्राणस्यतेजसिलयोमार्गमात्रमुदाहृतं। सर्वेशितुश्चसर्वादेस्तस्यान्यत्रलयःकथमित्या
दिश्रुतिस्मृतिभ्यः ॥ [4] ॥ ॥ ॐ भूतेषुतच्छ्रुतेःॐ ॥ ॥ भूतेष्वन्येषांदेवानांलयः। भूतेषुदेवाविलीयंतेभूतानि

परेनपरउदेतिनास्तमेत्येकलएवमध्येस्थातेतिबृहच्छ्रुतेः ॥४॥ ॥ ॐनैकस्मिन्दर्शयतोहिॐ ॥ ॥ नैकस्मि
न्भूतेसर्वेषांदेवानांलयः।पृथिव्यामृभवोविलीयंते वरुणेऽश्विनावग्नावग्नयोवायाविंद्रःसोमआदित्योबृहस्पतिरि
त्याकाशएवसाध्याविलीयंते। ऋभवःपृथिव्यांवरुणआपोग्नयस्तेजसिमरुतोमारुतआकाशेविनायकाविलीयं
तइतिमहोपनिषच्चतुर्वेदशिखाचदर्शयतः । अतोग्नौदेवाविलीयंतइत्यत्रनिर्दिष्टानामेव ॥५॥ ॐसमनाचा
सृत्युपक्रमादमृतत्वंचानुपोष्यॐ॥ ॥ देशतःकालतश्चव्याप्त्यासमोनापरमपुरुषोयस्याःसासमना । संसारानु
पक्रमात्स्वतएवामृतत्वंतस्याः । बृहच्छ्रुतिश्च । द्वौवावसृत्यनुपक्रमौप्रकृतिश्चपरमश्चद्वावेतौनित्यमुक्तौनित्यौ
चसर्वगतौचैतौज्ञात्वाविमुच्यतइति।नैतावतासाम्यं॥७॥ ॐतदपीतेःसंसारव्यपदेशात्ॐ॥ ॥समावेतौप्र
कृतिश्चपरमश्चनित्यौसर्वगतौनित्यमुक्तौअसमावेतौप्रकृतिश्चपरमश्चविलीनोहिप्रकृतौसंसारमेतिविलीनःप
रमेह्यमृतत्वमेतीतिसौपर्णश्रुतेः॥८॥ ॐसूक्ष्मंप्रमाणतश्चतथोपलब्धेःॐ ॥ ॥ सूक्ष्मत्वंचाधिकंब्रह्मणःप्रकृतेः।
ज्ञानानंदैश्वर्यादिप्रमाणाधिक्यंच।सर्वतःप्रकृतिःसूक्ष्माप्रकृतेःपरमेश्वरः।ज्ञानानंदौतथैश्वर्यंगुणाश्चान्येधिकाः
प्रभोरितिचतुरश्रुतिः॥९॥ ॐनोपमर्देनातःॐ॥ ॥अतस्तस्ययेविशेषगुणास्तेषामनुपमर्देनैवसाम्यं। देश

तःकालतश्चैवसमाप्रकृतिरीश्वरे । उभयोरप्यबद्धत्वंतदबंधःपरात्मनः ।स्वतएवपरेशस्यसाचोपास्तेसदाहरिं।
प्रकृतेःप्राकृतस्यापियेगुणास्तेतुविष्णुना । नियतानैवकेनापिनियताहिहरेर्गुणाइतिभविष्यत्पर्वणि ।। [१०] ।।ॐ
[११] अस्यैवचोपपत्तेरूष्माॐ।। ।।द्विधाहीदमवदृश्यतेऊष्मावदनूष्मावच्च।तत्रोष्मावत्परंब्रह्मयन्नजिघ्रंतिनपश्यंति
नशृण्वंतिनविजानंति । अथानूष्मावत्प्रकृतिश्चप्राकृतंचयन्नजिघ्रंतिजिघ्रंतिचयन्नपश्यंतिपश्यंतिचयन्नशृण्वं
तिशृण्वंतिचयन्नजानंतिजानंतिचेतिसौपर्णश्रुतेःकिंचित्साम्योपपत्तेः ।। [११] ।। ॐप्रतिषेधा[१२]दितिचेन्नशारीरात्
ॐ।।।असमोवाएषपरोनहिकश्चिदेवंदृश्यतेसर्वेह्येतेऽणवोजायंतेचम्रियंतेचच्छिद्राह्येतेभवंतिअथपरोनजाय
तेनम्रियतेपूर्णश्चैषभवतीतिचतुर्वेदशिखायांसाम्यप्रतिषेधान्नेतिचेन्न।शारीराद्धिसाम्यंप्रतिषिध्यते। [१२] ।कुतः।।
।। ॐस्पष्टो[१३]ह्येकेषांॐ ।। ।। अथातःसमाश्चासमाश्चाभिधीयंतेसमासमाश्चाथसमानिब्रह्मणोरूपाणियैरुत्पत्तिः
स्थितिर्लयोनियतिरायतिश्चैकंह्येवैतद्भवत्यथासमाःब्रह्मेंद्रोरुद्रःप्रजापतिर्बृहस्पतिर्येकेचदेवागंधर्वामनुष्याः
पितरोसुरायत्किंचेदंचरमचरंचाथसमासमाप्रकृतिर्वावसमासमासैषाहिनित्याअजरातद्वशाचेतिस्पष्टोहिमा
ध्यंदिनायनानांसमादिवादः।। [१३] ।।ॐस्मर्यते[१४]ॐ।।।मत्स्यकूर्मवराहाद्याःसमाविष्णोरभेदतः।ब्रह्माद्यास्त्वसमाः

प्रोक्ताःप्रकृतिश्चसमासमेतिवाराहे॥[१४] ६॥ॐतांनिपरेतथाह्याहॐ॥प्राणद्वारेणसर्वाणिदैवतानिपरमात्मनिवि
लीयंते।सर्वेदेवाःप्राणमाविश्यदेवेमुक्तालयंपरमेयांत्यचिंत्यइतिकौषारवश्रुतिः॥[१५] ७॥॥ ॐ[१६]अविभागोवचनात्
ॐ॥॥एतेदेवाएतमात्मानमनुविश्यसत्याःसत्यकामाःसत्यसंकल्पायथानिकाममंतर्बहिःपरिचरंतीतिगौपव
नश्रुतिः। तत्परमेश्वरकामाद्यविभागेनैवतेषांसत्यकामत्वं।कामेनमेकामआगाद्धृदयाद्धृदयंमृत्योरितिवचना
त्।मुक्तानांसत्यकामत्वंसामर्थ्यंचपरस्यतु।कामानुकूलकामत्वंनान्यत्तेषांविधीयतइतिब्राह्मे॥[१६] ८॥॥ॐतदोको
[१७]ग्रेज्वलनंतत्प्रकाशितद्वारोविद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्चहार्दानुगृहीतःशताधिकयाॐ॥॥उत्क्रां
तिकालेहृदयस्याग्रेज्वलनंभवति।तस्यहैतस्यहृदयस्याग्रंप्रद्योततइतिश्रुतेः । तत्प्रकाशितद्वारोनिष्क्रामति ।
विद्यासामर्थ्यात् यंयंवापिस्मरन्भावंत्यजत्यंतेकलेबरं। तंतमेवैतिकौंतेयसदातद्भावभावितइतिस्मृतेर्विद्या।शे
षगत्यनुस्मरणयोगाच्च। आचार्यस्तुतेगतिंवक्तेतिहिलिंगं। हृदिस्थेनैवहरिणातस्यैवानुग्रहेणतु । उत्क्रांतिर्ब्रह्म
रंध्रेणतमेवोपासतोभवेदितिचाध्यात्मे। शतंचैकाचहृदयस्यनाड्यस्तासांमूर्धानमभिनिःसृतैका । तयोर्ध्वमा
यन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंतीतिच ॥[१७] ॥ ॐ[१८]रश्म्यनुसारीॐ ॥ ॥ निष्क्रामति । सहस्रंवाआदि

त्यस्यरश्मयआसुनाडीष्वाततास्तत्रश्वेतःसुषुम्नोब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैषनिर्गच्छतीतिपौत्रा
यणश्रुतिः।।[१८]।।ॐनिशिनेतिचेन्न[१९]संबंधात्ॐ।। ।।रश्म्यभावान्निशिज्ञानिनउत्क्रमणंनयुक्तमितिचेन्न । सर्वदा
संबंधाद्रश्मीनां।[१९]। कियत्कालं।। ।।ॐयावद्[२०]देहभावित्वाद्दर्शयतिचॐ।। ।।यावद्देहोविद्यतेतावद्रश्मिसंबंधोस्त्ये
व।संसृष्टावाएतेरश्मयश्चनाड्यश्चनैषांवियोगोयावदिदंशरीरमतएतैःपश्यत्येतैरुत्क्रामत्येतैःप्रवर्ततइतिमाध्यं
दिनायनश्रुतिः।।[२०]।। ॐअ[२१]तश्चायनेपिहिदक्षिणेॐ।। ।।दक्षिणेमरणाद्यातिस्वर्गंब्रह्मोत्तरायणइत्युक्तेपिज्ञानि
नोदक्षिणायनोत्क्रांतिर्युज्यते। शतंपंचैवसूर्यस्यदक्षिणायनरश्मयः। तावंतएवनिर्दिष्टाउत्तरायणरश्मयः।तेस
र्वेदेहसंबद्धाःसर्वदासर्वदेहिनां। महर्लोकादिगंतारउत्तरायणरश्मिभिः । निर्गच्छंतीतरैश्चापियैरेष्टव्येतराग
तिः।उत्तरंदक्षिणमितितएवतुनिगद्यते। नतुकालविशेषोस्तिज्ञानिनांनियमात्फलं। ददातिकालेनुगुणेफलं
किंचिद्विशिष्यते। अत्युत्तमानांकेषांचिन्नविशेषोस्तिकालतइतिहिनारायणाध्यात्मे ।।[२१] [१]।। ।।ॐयोगि[२२]नःप्रति
स्मर्येतेस्मार्तेचैतेॐ।। ।।नकेवलंकालादिकृतेब्रह्मचंद्रगतीस्मर्येते। किंतुज्ञानयोगिनःकर्मयोगिनश्च। अग्निर्ज्यो
तिरहःशुक्लःषण्मासाउत्तरायणं। तत्रप्रयातागच्छंतिब्रह्मब्रह्मविदोजनाः ।धूमोरात्रिस्तथाकृष्णःषण्मासाद

क्षिणायनं । तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्ततइत्यत्रयोगीतिविशेषणात्स्मरणनिमित्तेचैतेगती । गत्यनु
स्मरणाद्ब्रह्मचंद्रंवागच्छतिध्रुवं । अननुस्मरतःकालेस्मरणंप्राप्यवैगतिरित्यध्यात्मे ॥[२२]१०॥ ॥ इतिश्रीमत्कृष्णद्वै
पायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्यद्वितीयःपादः ॥ ४ ॥ २ ॥
ॐ ॥ मार्गोगम्यंचास्मिन्पादउच्यते ॥ ॥ ॐअर्चिरादिनातत्प्रथितेःॐ ॥ ॥ तेऽर्चिषमभिसंभवंत्यर्चिषोहरह्न
आपूर्यमाणपक्षमित्यर्चिषःप्राथम्यंश्रूयते । यदाहवैपुरुषोस्माल्लोकात्प्रैतिसवायुमागच्छतीतिवायोः । तत्रार्चि
षःप्राप्तिरेवप्रथमा । द्वावेवमार्गौप्रथितावर्चिरादिर्विपश्चितां । धूमादिःकर्मिणांचैवसर्ववेदविनिर्णयात् । अग्नि
र्ज्योतिरितिद्वेधैवार्चिषःसंप्रतिष्ठितिः । अग्निंगत्वाज्योतिरेतिप्रथमंब्रह्मसंव्रजन्निति । एकस्मिंस्तुपुरेसंस्थोद्विरू
पोग्निःसुतोमहानितिब्रह्मतर्के ॥१॥ ॥ ॐ[२]वायुशब्दादविशेषविशेषाभ्यांॐ ॥ ॥ अर्चिषोवायुंगच्छतिसवायुमा
गच्छतीतिसामान्यवचनात् । सइतोगतोद्वितीयांगतिंवायुमागच्छतिवायोरहरह्नआपूर्यमाणपक्षमितिविशे
षवचनाच्च ॥२॥ ॥ ॐ[३]तटितोधिवरुणःसंबंधात्ॐ॥ ॥ मासेभ्यःसंवत्सरंसंवत्सराद्वरुणलोकंवरुणलोकात्प्रजा
पतिलोकमितिकौंडिन्यश्रुतिः । संवत्सरात्तटितमागच्छतितटितःप्रजापतिलोकमितिचगौपवनश्रुतिः । तत्र

तटितोवरुणंगच्छति। तटिताह्यूह्यतेवरुणलोकस्तटिदुपरिमुक्तामयोराजतेतत्रासौवरुणोराजासत्यानृतेवि विंचतीत्युपरिसंबंधत्वश्रुतेः ॥३॥ ॥ ॐ[४]आतिवाहिकस्तल्लिंगात्ॐ ॥ ॥ पूर्वोक्तस्त्वातिवाहिकोवायुः। पूर्वगम नलिंगात्।[४]। कुतः ॥ ॥ ॐ[५]उभयव्यामोहात्तत्सिद्धेःॐ ॥ ॥ सवायुमागच्छतीतिप्रथममुच्यते। उत्क्रांतोविद्वा न्परमभिगच्छन्विद्युतमेवांततउपगच्छतिद्यौर्वाववविद्युत्तत्पतिंवायुमुपगम्यतेनैवब्रह्मगच्छतीत्यंतेपिवायुगम नश्रुतेः । पूर्वोक्तआतिवाहिकःपरोवेतिव्यामोहेउत्तरेदिवस्पतिरितिविशेषणात्पूर्वत्रातिवाहिकस्यैवसिद्धेः । ब्रह्मतर्केच उत्क्रांतस्तुशरीरात्स्वाद्गच्छत्यर्चिषमेवतु। ततोहिवायोःपुत्रंचयोसौनाम्नातिवाहिकः। ततोहःपूर्व पक्षंचाप्युदक्संवत्सरंतथा ।तटितंवरुणंचैवप्रजापंसूर्यमेवच। सोमंवैश्वानरंचेंद्रंध्रुवंदेवींदिवंतथा। ततोवायुं परंप्राप्यतेनैतिपुरुषोत्तममिति ॥४॥ ॥ ॐ[६]वैद्युतेनैवतच्छ्रुतेःॐ ॥ ॥ प्रकारांतरेणतत्रतत्रोच्यमानत्वाद्वायोर पिपरतोब्रह्मणोर्वाग्गंतव्योस्तीतिनाशंकनीयं । विद्युत्पतिनावायुनैव। सएनान्ब्रह्मगमयतीतिब्रह्मगमनश्रु तेः। विद्युत्पतिर्वायुरेवनयेद्ब्रह्मनचापरः। कुतोन्यस्यभवेच्छक्तिस्तमृतेप्राणनायकमितिबृहत्तंत्रे ॥ ५ ॥ ॥ ॐ[६] कार्यंबादरिरस्यगत्युपपत्तेःॐ ॥ ॥ सएनान्ब्रह्मगमयतीतिकार्यंब्रह्मगमयतीतिबादरिर्मन्यते । ऋतेदेवान्परं

ब्रह्मकःपुमान्प्राप्नुयात्कचित् । यद्यपिब्रह्मदृष्टिःस्याद्ब्रह्मलोकमवाप्नुयादित्यध्यात्मवचनात्तस्यैवगत्युपपत्तेः॥[७]॥
ॐविशेषितत्वाच्चॐ ॥ ॥ यदिहवावपरमभिपश्यतिप्राप्नोतिब्रह्माणंचतुर्मुखंप्राप्नोतिब्रह्माणंचतुर्मुखमितिकौ
षारवश्रुतौ ॥[८]॥ ॐ[९]सामीप्यात्तुतद्व्यपदेशःॐ ॥ ॥ ब्रह्मविदाप्नोतिपरमितितद्व्यपदेशस्तुसमीपतएवपरमपि
प्राप्नोतीत्येतदर्थएव ।[९]। कदा ॥ ॥ ॐ[१०]कार्यात्ययेतदध्यक्षेणसहातःपरमभिधानात्ॐ॥ ॥ तेहब्रह्माणमभिसं
पद्ययदैतद्विलीयतेऽथसहब्रह्मणापरमभिगच्छंतीतिसौपर्णश्रुतेर्महाप्रलयेतदध्यक्षेणब्रह्मणासहगच्छंति॥[१०]॥
ॐ[११]स्मृतेश्चॐ ॥ ॥ ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे । परस्यांतेपरात्मानःप्रविशंतिपरंपदमिति ॥[११]॥ ॐ[१२]प
रंजैमिनिर्मुख्यत्वात्ॐ ॥ ॥ ब्रह्मशब्दस्यतत्रैवमुख्यत्वात्परमेवब्रह्मगमयतीतिजैमिनिर्मन्यते ॥[१२]॥ ॐ[१३]दर्श
नाच्चॐ ॥ ॥ दृष्टत्वाच्चपरब्रह्मणः ॥[१३]॥ ॐ[१४]नचकार्येप्रतिपत्त्यभिसंधिःॐ ॥ ॥ नहिकार्येप्रतिपत्तिःप्राप्नवानी
त्यभिसंधिश्च । यदुपास्तेपुमान्जीवन्यत्प्राप्तुमभिवांछति । यच्चपश्यतितृप्तःसंस्तत्प्राप्नोतिमृतेरन्वितिपाद्मे
॥[१४]॥ ॐ[१५]अप्रतीकालंबनान्नयतीतिबादरायणउभयथाचदोषात्तत्क्रतुश्चॐ ॥ ॥ प्रतीकंदेहउद्दिष्टोयेषांतत्रैव ॥१५४॥
दर्शनं। नतुव्याप्ततयाक्कापिप्रतीकालंबनास्तुते । अप्रतीकादेवतास्तुऋषीणांशतमेवच । राज्ञांचशतमुद्दिष्टं

गंधर्वाणांशतंतथा । एतेधिकारिणोव्याप्तदर्शिनोन्येनतुक्वचित् । अयोग्यदर्शनेयत्नाद्भ्रंशः पूर्वस्यचापितु ।अप्र
तीकाश्रयायेहितेयांतिपरमेवतु । स्वदेहेब्रह्मदृष्ट्यैवगच्छेद्ब्रह्मसलोकतां । ब्रह्मणासहसंप्राप्तेसंहारेपरमंपदमि
तिगारुडवचनात् उभयत्रोक्तदोषाच्चाप्रतीकालंबनान्परंनयति।सयथाकामोभवतितत्क्रतुर्भवतियत्क्रतुर्भवति
तत्कर्मकुरुतेयत्कर्मकुरुतेतदभिसंपद्यतइतिश्रुतेश्च । अत्रकर्मोपासनमेव । अन्यान्कार्यंनयतीतिभगवन्मतं
॥ १५ ॥ ॐविशेषंचदर्शयतिॐ ॥ ॥ अंतःप्रकाशाबहिःप्रकाशाःसर्वप्रकाशादेवावावसर्वप्रकाशाऋषयोंतः
प्रकाशामनुष्याएवबहिःप्रकाशाइतिचतुर्वेदशिखायां ॥ १६ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्यतृतीयःपादः ॥ ४ ॥ ३ ॥ ॥ ॥
॥ ॐ ॥ भोगमाहास्मिन्पादे ॥ ॥ ॐसंपद्याविहायस्वेनशब्दात् ॥ ॥ सयएवंविदेवंमन्वानएवंपश्यन्नात्मा
नमभिसंपद्यैतेनात्मनायथाकामंसर्वान्कामाननुभवतीतिसौपर्णश्रुतेः । परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनि
ष्पद्यतइतिच । एतंसेतुंतीर्त्वांधस्सन्ननंधोभवतीतिच । तत्रतरणंनामतत्प्राप्तयेऽन्यतरणमेव । इमांघोरामशि
वांनदींतीर्त्वैतंसेतुमाप्यैतेनैवसेतुनामोदतेप्रमोदतआनंदीभवतीतिमौद्गल्यश्रुतेः ॥ १ ॥ ॥ ॐमुक्तःप्र

तिज्ञानात् ॐ॥ ॥मुक्तएवात्रोच्यते।अहरहरेनमनुप्रविशत्युपसंक्रमतेचनतत्रमोदतेनप्रमोदतेनकामाननुभव
तिबद्धोह्येषतदा भवत्यथयदैनंमुक्तोनुप्रविशतिमोदतेचप्रमोदतेचकामांश्चैवानुभवतीतिबृहच्छ्रुतौप्रतिज्ञाना
त् ॥२॥ ॥ ॐआत्माप्रकरणात्ॐ॥ ॥परंज्योतिःशब्देनपरमात्मैवोच्यते। तत्प्रकरणात् । परंज्योतिःपरं
ब्रह्मपरमात्मादिकागिरः ।सर्वत्रहरिमेवैकंब्रूयुर्नान्यंकथंचनेतिब्रह्मांडे ॥ ३ ॥॥ ॐअविभागेनदृष्टत्वात्ॐ॥ ॥
येभोगाःपरमात्मनाभुज्यंतेतएवमुक्तैर्भुज्यंते । यानेवाहंशृणोमियान्पश्यामियान्जिघ्रामितानेवैतइदंशरी
रंविमुच्यानुभवंतीतिदृष्टत्वाच्चतुर्वेदशिखायां । भविष्यत्पुराणेच मुक्ताःप्राप्यपरंविष्णुंतद्भोगाँल्लेशतःक्व
चित्। बहिष्ठान्भुंजतेनित्यंनानंदादीन्कथंचनेति ॥४॥ ॥ ॐब्राह्मेणजैमिनिरुपन्यासादिभ्यःॐ ॥ ॥ सर्व
देहपरित्यागेनमुक्ताःसंतोब्राह्मेणैवदेहेनभोगान्भुंजतइतिजैमिनिर्मन्यते ।सवाएषब्रह्मनिष्ठइदंशरीरंमर्त्यम
तिसृज्यब्रह्माभिसंपद्यब्रह्मणापश्यतिब्रह्मणाशृणोतिब्रह्मणैवेदंसर्वमनुभवतीतिमाध्यंदिनायनश्रुतावुपन्यासा
त् । आदत्तेहरिहस्तेनहरिदृष्ट्यैवपश्यति । गच्छेच्चहरिपादाभ्यांमुक्तस्यैषास्थितिर्भवेदितिस्मृतेः।गच्छामि
विष्णुपादाभ्यांविष्णुदृष्ट्याचदर्शनं।इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्यतीतिबृहत्तंत्रोक्तयुक्तेश्च॥५॥ॐचि

ति६मात्रेणतदात्मकत्वादित्यौडुलोमिःॐ ।। ।। चितिमात्रोदेहोमुक्तानांपृथग्विद्यतेतेनभुंजते। सर्वंवाएतदचि
त्परित्यज्यचिन्मात्रएवैषभवतिचिन्मात्रएवावतिष्ठतेतामेतांमुक्तिरित्याचक्षतइत्युद्दालकश्रुतेश्चिदात्मकत्वा
दित्यौडुलोमिर्मन्यते ।। ६ ।। ॐएवमप्युपन्यासात्पूर्वभावादविरोधंबादरायणः ।। ।। सवाएषएतस्मान्मर्त्याद्विमु
क्तश्चिन्मात्रीभवत्यथतेनैवरूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानातितामाहुर्मुक्तिरितिसौपर्णश्रु
तौचिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्यचभावादुभयत्राप्यविरोधंबादरायणोमन्यते। नारायणाध्यात्मेच ।
मर्त्यंदेहंपरित्यज्यचितिमात्रात्मदेहिनः। चितिमात्रेंद्रियाश्चैवप्रविष्टाविष्णुमव्ययं । तदंगानुगृहीतैश्चस्वांगैरेव
प्रवर्तनं। कुर्वंतिभुंजतेभोगांस्तदंतर्बहिरेववा। यथेष्टंपरिवर्तंतेतस्यैवानुग्रहेहरिताइति।।८।। ।।ॐसंकल्पादेवच
तच्छ्रुतेःॐ ।। ।। नतेषांभोगादिषुप्रयत्नापेक्षा । सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंती
त्यादिश्रुतेः ।।९।। ।। ॐअतएवचानन्याधिपतिःॐ ।। ।। सत्यसंकल्पादेव। परमोधिपतिस्तेषांविष्णुरेवनसंश
यः। ब्रह्मादिमानुषांतानांसर्वेषामविशेषतः । ततःप्राणादिनामांताःसर्वेपिपतयःक्रमात्। आचार्याश्चैवसर्वेपि
यैर्ज्ञानंसुप्रतिष्ठितं । एतेभ्योन्यःपतिर्नैवमुक्तानांनात्रसंशयइतिवाराहे।। १० ।। ।।ॐअभावंबादरिराहह्येवंॐ।।

॥ चिन्मात्रंविनान्योदेहस्तेषांनविद्यतइतिबादरिः । अशरीरोवावतदाभवत्यशरीरंवावसंतंनप्रियाप्रियेस्पृश
तोयाभ्यांह्येषउन्मथ्यतइत्येवंकौठरव्यश्रुतावाहहि ॥[१०]॥ ॐ[११]भावंजैमिनिर्विकल्पाम्नानात्ॐ॥ सवाएषएवंवि
त्परमभिपश्यत्यभिशृणोतिज्योतिषैवरूपेणचितावाचितावानित्येनवानित्येनवाथानंदीह्येवैषभवतिनानंदकं
चिदुपस्पृशतीत्यौद्दालकश्रुतौविकल्पाम्नानादन्यदेहस्यापिभावंजैमिनिर्मन्यते ॥[११]॥ ॐ[१२]द्वादशाहवदुभयवि
धंबादरायणोतःॐ॥ ॥यथाद्वादशाहःक्रत्वात्मकःसत्रात्मकश्चभवति । एवंमुक्तभोगोबाह्यशरीरकृतश्चिन्मा
त्रकृतश्चभवतीतिबादरायणोमन्यते ।[१२]। उपपत्तिश्च ॥।॥ ॐ[१३]तंन्वभावेसंध्यवदुपपत्तेःॐ ॥ ॥ संध्यंस्वप्नःसंध्यं
तृतीयंस्वप्नस्थानमितिश्रुतेः ॥[१३]॥ ॐ[१४]भावेजाग्रद्वत्ॐ ॥ ॥ब्रह्मवैवर्तेच स्वप्नस्थानांयथाभोगोविनादेहेनयु
ज्यते । एवंमुक्तावपिभवेद्विनादेहेनभोजनं । स्वेच्छयावाशरीराणितेजोरूपाणिकानिचित् । स्वीकृत्यजागरि
तवद्भुक्त्वात्यागःकदाचनेति ॥।॥ ॐ[१५]प्रदीपवदावेशस्तथाहिदर्शयतिॐ ॥ ॥शरीरमनुविश्यापितत्प्रकाशयंतः
पुण्यानेवभोगाननुभवंतिनतुदुःखादीन् । यथाप्रदीपोदीपिकादिषुप्रविष्टस्तत्स्थंतैलाद्येवभुंक्तेनतुकार्ष्ण्या ॥१५६॥
दि । तीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवतीतिहिदर्शयतिश्रुतिः । नच स्वर्गेलोकेनभयंकिंचनास्तीत्या

दिनास्वर्गादिस्थस्यैवतदितिवाच्यं ।[१५]। यतः ।।।। ॐ[१६]स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहिॐ ।। ।। सुखौ
मोक्षेवातदुच्यते । अत्रपिताऽपिताभवत्यनन्वागतंपुण्येनानन्वागतंपापेनेत्याद्याविष्कृतत्वात् । ब्रह्मवैवर्तेच
ज्योतिर्मयेषुदेहेषुस्वेच्छयाविश्वमोक्षिणः । भुंजतेसुसुखान्येवनदुःखादीन्कदाचन । तीर्णाहिसर्वशोकांस्तेपु
ण्यपापादिवर्जिताः । निवृत्तसर्वदोषास्तेगुणमात्रस्वरूपिणइति ।।[१६]।। ।। ॐ[१७]जगद्व्यापारवर्जंॐ ।। ।। सर्वान्का
मानाप्त्वाऽमृतःसमभवदित्युच्यते । तत्रसृष्ट्यादिभ्योन्यान्व्यापारानाप्नोति ।[१७]। कुतः ।। ।।ॐ[१८]प्रकरणादसन्नि
हितत्वाच्चॐ ।। ।।जीवप्रकरणत्वाज्जीवानांतादृक्सामर्थ्यविदूरत्वाच्च । वाराहेच । स्वाधिकानंदसंप्राप्तौसृष्ट्या
दिव्यापृतिष्वपि।मुक्तानांनैवकामःस्यादन्यान्कामांस्तुभुंजते।तद्योग्यतानैवतेषांकदाचित्क्वापिविद्यते । नचा
योग्यंविमुक्तोपिप्राप्नुयान्नचकामयेदिति ।।[१८]।। ॐ[१९]प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमंडलस्थोक्तेःॐ ।। ।।
तायोवेदसवेदब्रह्मसर्वेस्मैदेवाबलिमावहंतीतिप्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीतिचेन्न । आधिकारिकमंडला
धिपतिर्ब्रह्माहितत्रोच्यते । गारुडेच आत्मेत्येवपरंदेवमुपास्यहरिमव्ययं । केचिदत्रैवमुच्यंतेनोत्क्रामंतिकदा
चन ।अत्रैवचस्थितिस्तेषामंतरिक्षेतुकेचन । केचित्स्वर्गेमहर्लोकेजनेतपसिचापरे। केचित्सत्येमहाज्ञानागच्छं

तिक्षीरसागरं । तत्रापिक्रमयोगेनज्ञानाधिक्यात्समीपगाः । सालोक्यंचसरूपत्वंसामीप्यंयोगएवच ।इमामा
रभ्यसर्वत्रयावत्सुक्षीरसागरे । पुरुषोनंतशयनःश्रीमान्नारायणाभिधः । मानुषावर्णभेदेनतथैवाश्रमभेदतः ।
क्षितिपामनुष्यगंधर्वादेवाश्चपितरश्चिराः ।आजानजाःकर्मजाश्चतात्त्विकाश्चशचीपतिः।रुद्रोब्रह्मेतिक्रमशस्ते
षुचैवोत्तरोत्तराः।नित्यानंदेचभोगेचज्ञानैश्वर्यगुणेषुच।सर्वेशतगुणोद्रिक्ताःपूर्वस्मादुत्तरोत्तरं। पूज्यंतेचावरैस्ते
तुसर्वपूज्यश्चतुर्मुखः।स्वजगद्व्यापृतिस्तेषांपूर्ववत्समुदीरिता। सयुजःपरमात्मानंप्रविश्यचबहिर्गताः। चिद्रूपा
न्प्राकृतांश्चापिविनाभोगांस्तुकांश्चन। भुंजतेमुक्तिरेवंतेविस्पष्टंसमुदाहृतेति॥ [१९] ॥ॐविकारावर्तिचतथाहिद
र्शयतिॐ ॥ विकारावर्तिव्यापारोमुक्तानांनविद्यते ।इमंमानवमावर्तंनावर्ततइतिश्रुतिः।वाराहेचस्वाधिकारे
णवर्ततेदेवामुक्तावपिस्फुटं। बलिंहरंतिमुक्तायविरिंचायतुपूर्ववत्। सब्रह्मकास्तुतेदेवाविष्णवेचविशेषतः। न
विकाराधिकारस्तुमुक्तानामन्यएवतु। विकाराधिकृताज्ञेयायेनियुक्तास्तुविष्णुनेति ॥ [२०] ॥ ॐस्थितिमाहदर्श [२१] ॥१५७॥
यतश्चैवंप्रत्यक्षानुमानेॐ॥ ॥ एतत्सामगायन्नास्तइत्युच्यते। तत्रानंदादीनांवृद्धिर्ह्रासश्चनविद्यते। किंत्वेकंप्र
कारेणैवसर्वदास्थितिः । सएषएतस्मिन्ब्रह्मणिसंपन्नोनजायतेनम्रियतेनहीयतेस्थितएवसर्वदाभवतिदर्शनं

वब्रह्मदर्शनेवात्मानंतस्यैवंदर्शयतोनापत्तिर्नविपत्तिरित्याहजाबालश्रुतौ । यत्रगत्वानम्रियतेयत्रगत्वानजायते । नहीयतेयत्रगत्वायत्रगत्वानवर्धतइतिमोक्षधर्मे । विद्वत्प्रत्यक्षात्कारणाभावलिंगाच्च । ब्रह्मवैवर्तेच नह्रासोनचवृद्धिर्वामुक्तानांविद्यतेक्वचित् । विद्वत्प्रत्यक्षसिद्धत्वात्कारणाभावतोनुमा । हरेरुपासनाचात्रसदैवसुखरूपिणी । नतुसाधनभूतासासिद्धिरेवात्रसायतइति ॥ २१ ॥ ॐभोगमात्रसाम्यलिंगाच्चॐ ॥ ॥नचभोगविशेषादिविरोधः । एतमानंदमयमात्मानमनुविश्यनजायतेनम्रियतेनह्रसतेनवर्धतेयथाकामंचरतियथाकामंपिबतियथाकामंरमतेयथाकाममुपरमतइतिभोगमात्रसाम्यलिंगात् । अवृद्धिह्रासरूपत्वंमुक्तानांप्रायिकंभवेत् । कादाचित्कविशेषस्तुनैवतेषांनिषिध्यतइतिकौर्मे । प्रवाहतस्तुवृद्धिर्वाह्रासोवानैवकुत्रचित् । नाप्रियंकिंचिदपितुमुक्तानांविद्यतेक्वचित् । कुतएवतुदुःखंस्यात्सुखमेवसदोदितं । भोगानांतुविशेषेतुवैचित्र्यंलभ्यतेक्वचिदितिनारायणतंत्रे ॥ २२ १० ॥ ॥ ॐअनावृत्तिःशब्दादनावृत्तिःशब्दात्ॐ ॥ ॥ नचपुनरावर्ततेनचपुनरावर्ततेसर्वान्कामानाप्त्वाऽमृतःसमभवत्समभवदित्यादिश्रुतिभ्यः॥ २३ ११ ॥ज्ञानानंदादिभिःसर्वैर्गुणैःपूर्णायविष्णवे॥ नमोस्तुगुरवेनित्यंसर्वथाऽतिप्रियायमे ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंवट्तद्दर्श

तमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यंहरौतेनहि ॥ नित्यानंदोहरिःपूर्णोनित्यदाप्रीयतांमम ॥ नमस्तस्मैनमस्तस्मैनमस्तस्मैचविष्णवे ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्यचतुर्थःपादः ४ ॥ ॥ ४ ॥ संपूर्णोयंचतुर्थाध्यायः ॥ ॥ श्रीलक्ष्मीहयग्रीवार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥



The Credit of getting the Sarvamoola Books Scanned goes to Panditavareenya ityaadi birudankita Shreemajjaalihaala Shreenivaasaachaaryasya Vidyaa Suta, "Gomanjari" Udgrantha kartru, (Raghunatha suri virachita Manikya manjari granthasya Khandana Grantha) Veda Shaastra Puraanaartha Vishaarada, Panditavareenya Shree Dwarakaanaathaachaaryaru.
My heartful salute for him to provide me such a wonderful opportunity to work on this project.

Project Started on : 21 December 2009
Project Completed on : 20 March 2011

Scanned By : Aravindacharya Haranahalli, aravindbharadwajhs@gmail.com